श्री॰
शां॰ रा॰
टी॰
१९५

सामान्ये प्रतिष्ठिते रिपुः वशीकृत्वा उपसन्नार्थो लब्धितार्थः कृतश्चेत्सम्यक् तं काले प्रहरेदिति द्वयोः संबंधः १४ १५ किंचास्य दण्डं सेनां
च भेदेन दूषयेत्सः १६ प्रच्छन्नं यथा स्यात्तथा विचारयेत् मनसि विचिन्तयेत् १७ उपधैर्विषादिभिः फलितमाह नन्विति

न सन्निपातः कर्तव्यः सामान्ये विजये सति । विश्वासेनैवोपसन्नार्थो वशीकृत्वा प्रियः प्रभो १५
मन्त्रयथार्थं सहामात्यैर्मन्त्रविद्भिर्महात्मभिः । उपेक्षमाणो वृत्तान्तो हृदयेनापराजितः १६ अथा
स्य प्रहरेत्काले किंचिद्विचलिते पदे । दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः १६ आदिमध्यावसा
नतः प्रच्छन्नं च विचारयेत् । बलानि दूषयेदस्य जानन्नेव प्रमाणतः १७ भेदेनोपप्रदानेन संसृ
जेदौषधैस्तथा । न त्वेवाप्यलसंसर्गं रोचयेदरिभिः सह १८ दीर्घकालमपीक्षेत निहन्यादेव
शात्रवान् । कालाकांक्षी हि तद्यद्यथा विश्रम्भमाप्नुयुः । न सद्यो न्विति निहन्याच्च द्रष्टव्यो विजयो
ध्रुवः १९ न शल्यं चापि घटयेत्तिन वाचा कृकृतेन्द्रणा । प्राप्ते च प्रहरेत्कालेन च संवर्त्तते पुनः । ह
न्तुकामस्य देवेन्द्र पुरुषस्य रिपून्प्रति २० यो हि कालो व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणा ।
दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षुणा २१ ॥

१८ यथा विश्रम्भं विश्वासं प्राप्नुयुस्तथा कुर्यात् द्रष्टव्यः प्रदर्शनीयः १९ नेति सार्द्धः रिपुं हन्तुकामस्य पुनः कालो न संवर्त्त
ते नोपसंपद्यते अतः प्राप्ते काले प्रहरेदेव न तु कालान्तरं प्रतीक्षेतेत्यर्थः २० २१ ॥

१९५

ओजः सामर्थ्यं शत्रोरकाले प्राप्तेपि स्वकार्येन साधयेत् नापि तं प्रपीडयेत् कालेचनातिक्रामेदित्यर्थः २२ २४ चत्वारि मार्ईवादी
नि २५ मंत्रविप्लवभयाद्यदेकेनैव कर्त्तुं शक्यं तत्तेन प्रतिवक्तव्यं न बहून्प्रतीत्याह यदिति यच्छ्क्नोति निगृह्णाति कार्त्तेन प्रयच्छ्तीत्यर्थः २६

ओजश्च विनयेदेवं संगृह्णन्साधुसंमतं अकालेसाधयेन्मित्रं च प्राप्ते प्रपीडयेत् २२ विहाय कामं क्रो
धं च तथाहंकारमेव च युक्तो विवरमन्विच्छेद्धितानामपुनः पुनः २३ मार्दवं दंडमालस्यं प्रमादश्चसहेरो
न्नम मायाः सुविहिताः शत्रुसादयंत्यविचक्षणं २४ निहंत्येतानि चत्वारि मायाप्रतिविहायच ततः
शक्नोति शत्रूणां प्रहर्त्तुमविचारयन् २५ यदेवैकेन शक्येत गुह्यं कार्त्तुं तदाचरेत् यच्छ्क्नोति सचिवानु
हृमिथ्याविश्रावयंत्यपि २६ असत्यमिति हिंसावाततोन्यैः संविदं चरेत् ब्रह्मदंडमदृष्टेषु दृष्टेषु च
चतुरंगिणी २७ भेदं च प्रथमं युंज्यात्तूष्णीमपि तथैव च काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा
२८ प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः युक्तोस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः २९ प्रणिपा
तेन दानेन वाचा मधुरया ब्रुवन् अमित्रमपि सेवेत न च जातु विशंकयेत् ३० ॥

अन्यैः सह संविदं समतिं चरेत् यदि पूर्वो मंत्रं विभ्नयेदित्यर्थः ततश्चादृष्टेषु हरस्येषु ब्रह्मदंडं पुरोहितद्वारमभिचारं प्रयुंज्यात् दृष्टेप्रत्यद
शत्रौ चतुरंगिणीमपि प्रयुंज्यादित्याह ब्रह्मेति २७ २९ न विशंकयेत् शंकापन्नं कुर्यात् ३० ॥

तदेवाह स्थानानीति निराकृताः स्वशत्रुभिः सह प्रीतिं कुर्वाणान् अन्यान् शत्रुत्वेन पश्यति तदीयमित्रत्वेन विश्वसितीत्य
र्थः ३१ विविधवृत्तानां अस्थिराणां स्थिरचित्त एव भवेदित्यर्थः ३२ ३४ वेगवति सुप्रेमत्ति वप्रेतटे विवरणाद्बाधः इति योजना

स्थानानि शंकितानां च नित्यमेव विवर्जयेत् न च तेषां स्वसेद्राजा जाग्रतीह निराकृताः ३१
न ह्यतो ऽन्यत्करं कर्म किंचिदस्ति सुरोत्तम यथा विविधवृत्तानामैश्वर्यममराधिप ३२ तथा वि
विधनाशानामपि सम्भव उच्यते यतेत योगमास्थाय मित्रामित्र विचारयेत् ३३ मृदुमप्यव
मन्यंते तीक्ष्णादुद्विजते जनः मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ३४ यथा वप्रे वे
गवति सर्वतः संप्लुतोदके नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ३५ न बहूनभियुञ्जीत
यौगपद्येन शात्रवान् साम्ना दानेन भेदेन दंडेन च पुरंदर ३६ एकैकमेषां निष्पिंषन्शिष्टेषु नि
पुणं चरेत् न तु शक्तोपि मेधावी सर्वानेवारभेत्प्रभु ३७ यदा स्यान्महती सेना हयनागरथाकु
ला पदातियंत्रबहुला अनुरक्ता षडंगिनी ३८ यदा बहुविधां वृद्धिं मन्येत प्रतिलोमतः तदा
विवृत्य प्रहरेद्दस्यूनामविचारयन् ३९

३५ ३६ निपुणं कुशलं आरभेत पेहृमिति शेषः ३७ षडंगिनी रथतुर
गमातंगपदातिकोशवणिक्पथवती ३८ प्रतिलोमतः शत्रोपरत्वया विवृत्य प्रकटीभूय दस्यूनां दस्यून् ३९ ॥

उक्तोमेवार्थसंगृह्णाति नसामेति बलवतिशत्रौसामनप्रशस्यते किंतर्हिदंडोपनिषत्रहस्यदंडः नशत्रुर्विहतःकार्यइत्यादि
नाप्राशुक्तमीत्याक्कलेनैवसनाशनीयइत्यर्थः यतएवशत्रुषुमार्दवंयायैतिकिंनकार्यं नापियात्रिकंसदाकार्यं जयस्यानियत
त्वात् यात्रायांहिसस्यानांघातःसंकरक्रियाविषादिनाजलादीनांनाशनंभूयःपुनःपुनः प्रकृतेःसमनवियायाः विचारणा
कथंकोशःकथममात्याइत्यादिसंदेहस्थापनंतितत्रयमपिनकार्यंहिंसामूलत्वात्चिंताहृद्धिकरत्वाच्च तस्मात्कपटपूर्वकोदं

नसामदंडोपनिषत्प्रशस्यतेनमार्दवंशत्रुषुयात्रिकंसदा नसस्यघातोनचसंकरक्रियान
चापिभूयःप्रकृतेर्विचारणा ४१ मायाविभेदानुपसर्जनानितथैवपापंनयशःप्रयोगात्
अप्राप्तमर्थेष्वपचारयेत्तुपरेषुराष्ट्रेषुचसंप्रयुक्तान् पुराणिचैषामनुहत्यभूमिपाःपरेषु
भोगानखिलानजयंति पुरेषुनीतिविहितांयथाविधिप्रयोजयंतोबलहत्रसहन ४२

उपवक्षेयानित्यर्थः ४१ एतदेवविवृणोति मायेति मायाविभेदानानाविधाःमायाःप्रयुंजीत ततउपसर्जनानिपरस्परमित्र
भेदाःशत्रूणामुत्थापनादीनि तत्तथैवशत्रुषुपापंकापटंचप्रयुंज्यात् कथंयशसःप्रयोगात् प्रयोगेहियशोननाशनीयंप्राक्फ
लोदयादयमनेनास्माकमपकारश्चिंतितआसीदित्यकीर्तिमूलमंत्रतयानकुर्यात् किंतर्हिकुर्यादतआहअप्राप्तेति ४१ एषांप
नानशत्रूनपरेषुतत्तत्स्थानेषुअनुहत्यभोगान्मदीयानजयंति नीतिंपुरेषुस्वीयेषु ४२ ॥

श्री॰
शां॰रा॰
टी॰
९७

अनुसरणमेवास्मप्रदायेति एतेनममस्वामात्याःदुष्टाःस्वामात्यकाराजातंवंप्रतिगाताइतिलोकस्वभावात्कीर्तयित्वापरेषांपुरे
षुराष्ट्रेषुचतान्योजयंति ४३ कृत्याभिवकृत्यांसत्तुकारिणिदेवता ४४ ४७ संसृष्टंससर्गेअसंसृष्टश्चपरश्चवचभाषते अ

प्रदायगूढानिवसूनिराजनप्रच्छिद्यभोगानवधायचस्वान् दुष्टान्स्वदोषैरितिकीर्तयित्वापुरे
षुराष्ट्रेषुचयोजयंति ४३ तथैवचान्यैरपिशास्त्रवेदिभिःस्वलंकृतैःशास्त्रविधानदृष्टिभिः सु
शिक्षितैर्भाष्यकथाविशारदैःपरेषुकृत्यामुपधारयेच्च ४४ इन्द्रउवाच कानिलिंगानिदुष्टस्य
भवंतिद्विजसत्तम कथंदुष्टंविजानीयामेतत्पृष्टोब्रवीहिमे ४५ बृहस्पतिरुवाच परोक्षमगुणा
नाहसद्गुणानभ्यसूयते परैर्वाकीर्त्यमानेषुतूष्णीमास्तेपराङ्मुखः ४६ तूष्णींभावेपिविज्ञे ति
यंनचेद्भवतिकारणं निश्वासंचोष्ठसंदंशंशिरसश्चप्रकंपनं ४७ करोत्यभीक्ष्णंसंसृष्टमसंसृ
ष्टश्चभाषते अदृष्टितोविकुरुतेदृष्ट्वानैवाभिभाषते ४८ पृथगेत्यसमश्नातिनेदमद्ययथावि
धि आसनेशयनेयानेभावालक्ष्याविशेषतः ४९ आर्तिरार्तेप्रियेप्रीतिरेतावन्मित्रलक्षणं
विपरीतंतुबोद्धव्यमरिलक्षणमेवतत् ५० एतान्येवयथोक्तानिबुध्येथास्त्रिदशाधिप पुरुषा
णांप्रदुष्टानांस्वभावोबलवत्तरः ५१ इतिदुष्टस्यविज्ञानमुक्तंतेसुरसत्तम निशाम्यशास्त्रतत्वा

दृष्टितःपरोक्षेप्रतिकूलमपिकार्यंनकुरुते ४८ ४९ ५० ५१ ५२ ॥ र्थंयथावदमरेश्वर ५२॥

९७

५३ शुत्रवशात्तनमः ९३ धार्मिको अधार्मिकस्यच्छलादिकंविधेयमित्युक्तस्यकर्त्तव्यंएच्छतिधार्मिकइति धार्मिका

भीष्मउ॰ सतद्वचःशत्रुनिवर्हणोरतस्तथाचकारावितथंबृहस्पतेः चचारकालेविजयायचा
रिहावशाचशत्रूनतयत्पुरंदरः ५३ इतिश्रीमहाभारतेशान्तिपर्वणिराजधर्मेइन्द्रबृहस्पतिसंवादे
९३ युधिष्ठिरउ॰ धार्मिकोर्थानसंप्राप्यराजामात्यैःप्रबाधितः च्युतःकोशाच्चदण्डाच्चसुखमिच्छ
न्कथंचरेत् १ भीष्मउ॰ अत्रायंक्षेमदर्शीयइतिहासोनुगीयते तत्तेहंसंप्रवक्ष्यामितन्निबोधयुधि
ष्ठिर २ क्षेमदर्शीनृपसुतःक्षीणबलःपुरा मुनिंकालकवृक्षीयमाजगामेतिनःश्रुतं तंपप्र
च्छोपसंगृह्यकृच्छ्रामापदमास्थितः ३ राजोवाच अर्थेषुभागीपुरुषईहमानःपुनःपुनः अ
लब्ध्वामद्विधोराज्यंब्रह्मन्किंकर्तुमर्हति ४ अन्यत्रमरणात्स्तैन्यादन्यत्रपरसंश्रयात् क्षुद्रादन्यत्र
चाचारात्तन्ममाचक्ष्वसत्तम ५ व्याधिनाचाभिपन्नस्यमानसेनेतरेणवा धर्मज्ञश्चकृतज्ञश्च
द्विधःशरणंभवेत् निर्विद्यतिनरःकामान्निर्विद्यसुखमेधते त्यक्त्वाप्रीतिंचशोकंचलब्ध्वाबु
द्धिमयंसुखं ७ सुखमर्थाश्रयंयेषामनुशोचामितानहं ममह्यर्थाःसुबहवोनष्टाःस्वप्नइवा
गताः ८ दुष्करंबतकुर्वन्तिमह

स्यहीनसंपदोविजिगीषमाणस्य ९३ भागीभागार्हः ईहमानःयतमानः ४ ५
इतरेणशारीरेण ६ निर्विद्यतिविरज्यते कामात्विषयभोगात् बुद्धिमयंसुखंज्ञानरूपंयत् ७ ८ ९ ॥

श्री॰
शां॰ रा॰
टी॰
१९८

११ १२ इयं निर्विघतीति श्लोकेन त्वया शोक्या अहं च यच्च मम अस्ति तत्सर्वं अनित्यमिति जानता १२ नास्ति तत्त्वात् १३ स
र्वं तन्नाभून्न भविष्यति इदं हि सममसममेव वस्तुस्थितिरिति भावः १४ यतः पूर्वं प्राचीनसमाहारे राज्ञां समुदाये यान्यादिकं यच्च पूर्वं परे

इमामवस्थां संप्राप्तं दीनमार्त्तं श्रियाच्युतं यदन्यत्त्वमसीहत द्रूसन्तु शायिमां १ कौशल्येन
वमुक्तस्तु राजपुत्रेणायी मता मुनिः कालकहलीयः प्रत्युवाच महाद्युतिः १ मुनिरुवाच पुरा
स्तादेव ते बुद्धिरियं कार्या विजानता अनित्यं सर्वमेवेतदहं च मम चास्ति यत् २ यत्किंचिन्मन्यसे स्मा
सीति सर्वं तन्नास्ति विद्धि तत् एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ३ यद्धि भूतं भविष्यच्च सर्वं
तन्नाभविष्यति एवं विदित्वैव घत्त्वमर्थेभ्यः प्रमोदयामि ४ यच्च पूर्वं समाहारे यच्च पूर्वं परे परे
सर्वं तन्नास्ति तच्चैव तज्ज्ञात्वा कोऽनुसंज्वरेत् ५ भूत्वा च न भवत्येतदभूत्वा च भविष्यति शोकेन ह्य
क्तिसामर्थ्ये शोकं कुर्यात्कथं च न ६ क्व नु तेद्य पिता राजन्क्व नु तेद्य पितामहः न त्वं पश्यसि ता
न द्य न त्वां पश्यन्ति ते ऽपि च ७ आत्मनो ह्यध्रुवतां पश्यंस्तान्किमनुशोचसि बुद्ध्या चैवानुबुध्य
स्व ध्रुवं हि न भविष्यसि ८ अहं च त्वं च नृपते सुहृदः शत्रवश्च ते अवश्यं न भविष्यामः सर्वं च न
भविष्यति ९

परे पूर्वस्मिन् पूर्वस्मिन् राज्ञि तत्सर्वं तेन वना स्त्येवेति तत्तज्ज्ञात्वा सर्वज्ञ मम मंतात्यक्तेति भावः १५ सा
मर्थ्ये धनार्जनवीर्यं कथं च कथमपि न कुर्यात् शोकं १६ १७ आत्मनः देहस्य अध्रुवतामिति च्छेदः न भविष्यसि मरिष्यसि

=
⸗ १९८
⸗

२० नप्रमुच्येतप्रत्यनेणात्यागोनसंभवतिचेन्ममत्वंबाधवादौत्याज्यमित्याहापीति २१ विद्यात्विद्युः ततनिर्ममत्वं २२ २४
यादृच्छिकंअयत्नादागतं २५ यतत्शोकाद्व्यफलं यथालब्धेनवर्त्तयनजीवन्नपिपश्यामियादृच्छिकस्यनाशेनजीवना

येत्रविंशतिवर्षावैत्रिंशद्वर्षाश्चमानवाः अर्वागेवहितेसर्वेमरिष्यन्तिशरच्छतात् २० अपिचे
न्महतोवित्तात्प्रमुच्येतपूरुषः नैतन्ममेतितन्मत्वाकुर्वीतप्रियमात्मनः २१ अनागतंयन्नममे
तिविद्यादतिक्रान्तंयन्नममेतिविद्यात् दिष्टंबलीयइतिमन्यमानास्तेपंडितास्तत्सतांस्थानमाहुः
अनाढ्याश्चापिजीवन्तिराज्यंचाप्यनुशासति बुद्धिपौरुषसंपन्नास्त्वयातुल्याधिकाजनाः २३ नच
त्वमिवशोचन्तितस्मात्त्वमपिमाशुचः किंनत्वंतैर्नरैःश्रेयान्तुल्योवाबुद्धिपौरुषैः २४ राजोवा
च यादृच्छिकंसर्वमासीत्तद्राज्यमितिचिन्तये क्रियतेसर्वमेवेदंकालेनमहताद्विज २५ नसेवा
क्रियमाणस्यसेवानसेवनयोयन फलमेतत्प्रपश्यामियथालब्धेनवर्त्तयन् २६ मुनिरुवाच अ
नागतमतीतंचयथातथ्यविनिश्चयात् नात्रशोचेतकौशल्यसर्वार्थेषुतथाभव २७ अवाप्यान्का
मयन्नार्थान्नानवाप्यान्कदाचन प्रत्युत्पन्नाननुभवन्माशुचस्त्वमनागतान् २८ यथालब्धोपप
न्नार्थैस्तथाकौशल्यरंस्यसे कच्चिच्छुद्धस्वभावेनश्रियाहीनोनशोचसि पुरस्ताद्भूतपूर्वत्वाद्धीनभा

ल्लोपेपिशोकोननश्यतीत्यर्थः २६ २९ नसश्यतेनैनेर्नसंतप्यति ३० ॥ ग्योहिदुर्मतिः धातारंगर्हतेनित्यंलब्धा

श्री·
भा·रा·
टी·
९९

अनर्हानस्नेहादीन्नीचान् ३१ ३२ सहस्वेति मा ईर्ष्य अन्यत्र शास्त्रैककुशलाः निर्मत्सराः जनं द्विषतः सकाशात् अभि
निष्पद्यते प्रस्रवति ३३ विधित्सा क्रियाणामनुपरमः तेन साधनेन च संकुलकं अस्थिरं नित्यं नवं नवमारंभकुर्वाणाः

अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान् यत्तस्मात्कारणादेतद्दुःखं विभूयोऽनुवर्तते ३१ ईर्ष्याभि
मानसंपन्ना राजन्कृपणमानिनः कश्चिन्न तथा राजन्मत्सरी कोशलाधिप ३२ सहस्व श्रियमन्ये
षां यद्यपि त्वयि नास्ति सा अन्यत्रापि सती लक्ष्मीः कुशला भुंजते सदा अभिनिष्पद्यते श्रीर्हि सन्त्यपि द्वि
षतो जने ३३ श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः योगधर्मविदो धीराः स्वयमेव त्यजन्त्युत ३४ ब
हुसंकुलकं दृष्ट्वा विधित्सासाधनमेव च तथान्ये संत्यजन्त्येवं मत्वा परमदुर्लभं ३४ त्वं पुनः प्राज्ञरूपः स
न्कृपणं परितप्यसे अकाम्यान्कामयानोऽर्थान्पराधीनानुपद्रवान् ३५ तां बुद्धिमुपजिज्ञासुस्त्वमेवै
तान्परित्यज अनर्थांश्चार्थरूपेण अर्थांश्चानर्थरूपिणः ३६ अर्थायैव हि केषांचिद्धननाशो भव
त्युत आनंत्यं तत्सुखं मत्वा श्रियमन्यः परीप्सति ३७ रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिम
न्यते तथा तस्येहमानस्य समारंभो विनश्यति ३८ कृच्छ्राल्लब्धमभिप्रेतं यदि कौशल्य नश्यति
तदा निर्विद्यते सोऽर्थात्परिभग्नक्रमो नरः ३९

ष्ट्वा अन्ये प्राकृतास्तां संत्यजन्त्येव ३४ उपद्रवान् अस्थिरान् ३५ अ
र्थरूपेणाभासमानाः ३६ आद्यस्योदाहरणं अर्थायेति ३७ द्वितीयस्योदाहरणं रममाण इति ३८ परिभग्नक्रमः नष्टारंभः ३९ ॥

९९

४० ४१ विश्रामयेन्नदध्यात् ४२ ४४ बुद्ध्याकल्पितामापदंपश्य कथमनयाआहनियच्छेति यथाक्रमेणान्वयः इंद्रियादीनां
निरोधेल्लिङ्गानांत्वसम्यक्स्फुरतितेनापदाकल्पितत्वंस्फुटीभवतीतिभावः अन्येषामपीति सार्द्धःश्लोकः ४५ प्रतीति भावे

धर्ममेकेभिपद्यंतेकल्याणाभिजनानराः परत्रसुखमिच्छंतोनिर्विघ्नंचलौकिकात् ५०
जीवितंसंत्यजंत्येकेधनलोभपराजनाः नजीवितार्थमन्यंतेपुरुषाहितनादृते ५१ पश्यतेषां
कृपणानांपश्यतेषामबुद्धितां अध्रुवेजीवितेमोहादर्थदृष्टिमुपाश्रिताः ५२ संचयेचविना
शांतेमरणांतेचजीविते संयोगेचवियोगांतेकोनुविश्रामयेन्मनः ५३ धनंवापुरुषोराजन्पु
रुषंवापुनर्धनं अवश्यंप्रजहात्येवतद्विद्वान्कोनुसंज्वरेत् ५४ अन्येषामपिनश्यंतिसुहृ
दश्चधनानिच पश्यबुद्ध्यामनुष्याणांराजन्नापदमात्मनः ५५ नियच्छयच्छसंयच्छइंद्रिया
णिमनोगिरं ५६ प्रतिषिद्धानचाप्येषुदुर्बलेष्वहितेष्वपि प्राप्तिसूक्ष्मेष्वपकृष्टेष्वसंभवे प्रज्ञा
नतृप्तोविक्रांतस्त्वद्विधोनानुशोचति ५७ अल्पमिच्छन्नचपलोमृदुर्दांतःसुनिश्चितः ब्रा
ह्मचर्योपपन्नश्चत्वद्विधोनैवशोचति ५८ ॥

षुप्राप्तिसूक्ष्मेषुदर्शनमात्रोत्पन्नेषुप्रतिषिद्धानविद्यतेअप्रत्याप्रियदर्शनाःसर्वेवर्त्तमानपदार्थाइत्यर्थः व्यपकृष्टेषुदेशतःका
लतश्चव्यवहितेष्वतीतानागतदूरस्थेषुदर्शनस्याप्यसंभवेचज्ञानसतित्वद्विधोनानुशोचतिइष्टानिष्टसंयोगयोरितिसार्द्धार्थः ५८

=
२

श्री·
शां·रा·
धी·
२०

४८ ५२ चतुरधिकशततमः ९४ एवंदुर्बलस्य हीनस्य स्वपक्षैः परैर्निर्जितस्य निर्हृतस्य धर्मपरस्य श्रेयानितियुक्तं प्रबलस्य तता
नैवजाल्मीकापालींवृत्तिमेषितुमर्हसि नृशंसमहत्तिपापिष्ठांदुःखांकापुरुषोचितां ४८ अपि
मूलफलाजीवोरमस्वैकोमहावने वाग्यतःसंगृहीतात्मासर्वभूतदयान्वितः ४९ सदृशंपंडि
तस्यैतदीषादंतेनदंतिना यदेकोरमतेरण्येयच्चाप्यल्पेनतुष्यति ५० महाह्रदःसंक्षुभितःआ
त्मनैवप्रसीदति एतदेवंगतस्याहंसुखंपश्यामिजीवितं ५१ असंभवेश्रियोराजन्हीनस्यस
चिवादिभिः दैवेप्रतिनिविष्टेचकिंश्रेयोमन्यतेभवान् ५२ इतिश्रीमहाभारतेशांतिपर्वणिराज
धर्मेकालकवृक्षीये ९४ मुनिरुवाच अथचेत्पौरुषंकिंचित्क्षत्रियात्मनिपश्यसि ब्रवी
मितांतुतेनीतिंराज्यस्यप्रतिपत्तये १ तांचेच्छक्नोषिनिर्मातुंकर्मचैवकरिष्यसि शृणुस
र्वमशेषेणयत्त्वांवक्ष्यामितत्त्वतः २ आचरिष्यसिचेत्कर्ममहतोर्थानवाप्स्यसि राज्यंराज्य
स्यमंत्रंवामहतींवापुनःश्रियं यद्येतद्रोचतेराजन्पुनर्ब्रूहिब्रवीमिते ३ राजोवाच ब्रवीतु
भगवान्नीतिमुपपन्नोस्म्यहंविभो अमोघोयंभवत्वद्यत्वयासहसमागमः ४ मुनिरुः हित्वादं
भंचकामंचक्रोधंहर्षंभयंतथा प्रत्यमित्राणिसेवस्वप्रणिपत्यकृतांजलिः ५ २०

ईशानस्यनिकटात्स्वजयोपायंवक्तुंअध्यायआरभ्यते अथचेदिति १३ उपपन्नोस्मिपौरुषेणातिशेषः ४ ५

विन्नवेतनारूपं ६ प्रमाणं विश्वासं प्रग्रहमिव प्रग्रहं रज्जं तस्यवाजस्थानीयो भविष्यसीत्यर्थः प्रग्रहस्तत्तला सूत्रेवं यानियमनेष्वा
जेइतिमेदिनी ७ ८ स्वशास्त्रेणानीतिशास्त्रेण प्रग्रहणं आदरं ग्रहणं स्वीकारादरकरोपरागोपलब्धिवंदीष्विति मेदिनी ९ बि
ल्वबिल्वेनेति अन्यपराजेयापीष्टुश्रुतिमत्वाजनकेनान्यविपरीतंवाघातय अस्यवैदेहस्य १० ११ प्रतिबयस्यानेतदकरणेऽया

तमुत्तमेन शौचेन कर्मणा चाभिरावय दातमर्हतीति तेविन्नवैदेहः सत्यसंगरः ६ प्रमाणं सर्वभूतेषु प्र
ग्रहं च भविष्यसि ततः सहायान्सौमित्रिः सालमप्येव्यमनानब्रवीत् ७ वर्तमानः स्वशास्त्रेणसंयता
त्माजितेन्द्रियः अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ८ तेनैव त्वपतिमता श्रीमता चाभिसत्कृतः
प्रमाणं सर्वभूतेषु गन्ता प्रग्रहणं महत् ततः स्वहृद्वललब्धामंत्रयित्वाहमंत्रिभिः श्रान्तैर्भेदयितारी
न्बिल्वं बिल्वेन भेदय पौरैर्वीसं विदक्तत्वाबलमप्यस्यघातयः ९ अलभ्यायेषुभाभावाः स्त्रियश्चाच्छा
दनानि च १० शय्यासनानि यानानि महार्हाणि गृहाणि च दत्तिरोषु राजानानिरस्ताः फलानि व
तेष्वेवसज्जयेथ्यावत्वयथानशेपत्वयपरः ११ यद्येवं प्रतिवेद्धुमायघुपेतणामर्हति नजातु विहृतः का
र्यः शत्रुः स्तनयमिच्छता १२ रमस्व परमामित्रे विषये प्राप्तसंमतः भजस्वेश्वतकाकीयैर्मित्रयर्मममन

मांतप्रतिषिद्धवानिति मम शत्रुरिति विहृतत्वं भवतितत्र्स्यमित्यर्थः १२ हेपरमअमित्रे शत्रुसमीपे श्वेतका र्थकैः १३ ॥
कीयैः स्वाचपतश्चकाकस्यतेषामिमेयर्मीः क्रमेणानित्यं जागरूकत्वभयचकितत्वपरेंगितज्ञत्वानितैः उपायैः मित्रयर्मं भजस्व
स्वेतरत्यत्रामाडेश्वतिपंरूपं पतोमरगः १३ ॥

श्री॰
शां॰रा॰
टी॰
२१

आरंभान्विरोधांश्च महानदीवत् उत्तरान् १९ प्रतिकरिष्यति प्रत्युपकारेण स्वकृत्ययनादिना उपकरिष्यति २० २१ धर्माय
मीमांकोशान्तयेमति ९१ फलस्य स्वर्गादेः अर्थस्य जयादेः मूलं कारणं कोशः ब्युच्छिद्येत विशेषत उच्छेदं गच्छेत् दैवं जया

आरंभांश्चास्य महतो दुष्प्रयोजय नदीवच्च विरोधांश्च बलवद्भिर्निकृष्यतां १५ उद्यानानि महार्हा
णि शयनान्यासनानि च प्रतिभोगसुखं चैव कोशमस्य विवर्धय १६ यत्तदानेप्रशाध्यसेब्राह्मणान्
नुवर्णयेतान् तेत्वांप्रतिकरिष्यतितंमोऽसंतिहकाउव १७ अप्रमत्तशयंगुणपशीलः प्राप्नोतिपरमांगतिं
त्रिविष्टपगुणपत्तमस्थानं प्राप्नोति मानवः १८ कोशान्तयेत्वमित्राणां वशे कोशल्यमाच्छति उभयत्र
सक्तस्य धर्मे चार्थे च पण्वव १९ फलार्थमूलं व्युच्छियेतेन नंदति शाश्वतः नचास्मिन्मानुषं कर्म दैवमस्या
पवर्णय २० अप्रमत्तशयं दैवपरः तिष्ठमेव विनश्यति याजयैनं विश्वजितां सर्वस्वेन वियुज्यतां २१ ततो
गच्छत्यसिद्धार्थः पीड्यमानो महावनं योगधर्मविद्गुणं किंचिदस्यापवर्णय २२ अपित्यागं बु
भुषितकश्चिद्स्वच्छेदनामयं सिद्धैनौषधियोगेन सर्वशत्रुविनाशिना नागानश्वान्मनुष्यांश्च कृतकै
रुपघातयेः २३ पतेचान्ये च बहवो दंभयोगाः सुचिंतिताः शक्या विसहता कर्तुं पुरुषेण कृतात्मना २४

दिकं २० २१ गच्छति अवगच्छति असिद्धार्थः कृतयज्ञादिप्रयोजनः म इति श्रीशांतिपर्वणि कालकवृक्षीये ९५ ॥
हाजनपीडांततस्मैनिवदयेत् तत्परिहारार्थं च वर्णयेत् २२ ततश्चान्यान्स्वराज्ञेत्याजयेदित्याहापीति उषधाधैरस्मन्नागादीन्घातयेदि

निकृतिंकपटंचकर्तुमनिच्छोर्थमिहेस्यनीत्यास्यसामात्यंजयोपायमाह ननिकृत्येत्यादिना १ ४ वंशुवयोः तस्यविदेहस्य

राजोवाच ननिकृत्यादंभेनब्रह्मन्निच्छामिजीवितं नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोप्यहं १
पुरस्तादेवभगवन्मयैतदपवर्जितं येनमांनाभिशंकेतयेनकृत्स्नंहितंभवेत् २ आनृशंस्येनय
स्मिंल्लोकेस्मिञ्जिजीविषुः नाहमेतदलंकर्तुंनैतन्मय्युपपद्यते ३ मुनिरुवाच उपपन्नस्त्वमेते
नयथात्तत्रियभाषसे प्रकृत्याह्युपपन्नोसिबुद्ध्याचाद्भुतदर्शनः ४ उभयोरेवचामर्थेयतिष्यातवत
एच संश्लेषंवाकरिष्यामिशाश्वतंह्यनपायिनं ५ त्वादृशंहिकुलेजातमनृशंसंबहुश्रुतं अमात्य
कोनकुर्वीतराज्यस्यप्रणायकोविदम् ६ यस्त्वंप्रव्राजितोराज्याद्व्यसनंचोत्तमंगतः आनृशंस्येनवृत्तेन
तत्रियेच्छसिजीवितं ७ आगंतामद्यहेतातवैदेहःसत्यसंगरः अथायंतंनियोक्ष्यामितत्करिष्यत्य
संशयं ततआहूयवैदेहंमुनिर्वचनमब्रवीत् अयंराजकुलेजातोविदिताभ्यंतरोमम ९ आदर्शः
शुद्धात्माशारदश्चंद्रमायथा नास्मिन्पश्यामिवृजिनंसर्वतोमेपरीक्षितः १० तेनतेसंधिरेवास्तुवि
श्वसास्मिन्यथामयि नराज्यमनमात्येनशक्यंशास्तुमपित्र्यहं ११ अमात्यःशूरएवस्याद्बुद्धिसंपन्न
एववा ताभ्यांचैवोभयंराजन्पश्यराज्यप्रयोजनं १२ ॥ ५ त्वादृशंराजानंलब्ध्वाअमात्यकर्मकोनकुर्वी

तत्रापितुसर्वोपिमादृशःकुर्वीतैवेत्यर्थः ६ उत्तमंमहत् ७ ११ ताभ्यांशौर्यबुद्धिभ्यांउभयंलोकद्वयं १२ ॥

१३ गणान्शत्रुसंघान् १४ १६ असांप्रतं अनुचितं १७ परोजनः शत्रुजनः भोजनादिनासंधेयः दंडापेत्वया मामैवश्रेयः

धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी महात्मा राजपुत्रोयं सतां मार्गमनुष्ठितः १३ सुसं
गृहीतस्त्वेवैष त्वया धर्मपुरोगमः संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् १४ यद्ययं प्रति
युध्येतोस्वकर्मन्तद्वियस्यतत् जिगीषमाणान्क्षात्रधर्मे पितृपैतामहे पदे १५ त्वं चापि प्रतियुध्येथा वि
जिगीषुव्रतेस्थितः अयुद्धे विनियोगान्मे वशोक्तहितेस्थितः १६ सत्वं धर्ममवेक्ष्य स्वं हित्वा लो
भममांप्रतं न च कामान्न च द्वेषाद्धात्त्वं धर्मं हातुमर्हसि १७ नैव नित्यं जयस्तात नैव नित्यं पराजयः न
स्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः १८ आत्मन्यपि च संदृश्यावुभौ जयपराजयौ निःशेष
कारिणां तात निःशेषकरणाद्भयं १९ इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणार्षभं प्रतिपूज्याभिसत्कृ
त्य पूजार्हमनुमान्य च २० यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महाश्रुतः श्रेयःकामो यथा ब्रूयादुभ
योरेव तत्क्षमं २१ यद्यद्वचनमुक्तोस्मि करिष्यामि च तत्तथा एतद्धि परमं श्रेयो न मेत्रास्ति विचारणा
२२ ततः कौशल्यमाहूय मैथिलो वाक्यमब्रवीत् धर्मतो नीतितश्चैव लोकश्च विजितो मया २३
अहं त्वया चात्मगुणैर्जितः पार्थिवसत्तम आत्मानमनवज्ञाय जितवद्वर्ततां भवान् २४ ॥

त्वर्थः १८ २३ अहमिति जितवत्स्वात्पजयश्च २४ ॥

२५ २८ पुनःकालहृतीयेषडुत्तरशततमः १०५ गणानांवृत्तंबुभुत्सुःपूर्वोक्तमनुवदतिब्राह्मणेति १४ क्षीणस्यग्रहणेऽतिजिजीवि

नावमन्यामितेबुद्धिंनावमन्येचपौरुषं नावमन्येजयामीतिजितवद्वर्ततांभवान् २५ यथावत्प्र
जितोराजन्गृहंगंतासिमेभृशं ततःसंपूज्यतौविप्रंविश्वस्तौजग्मतुर्गृहान् २६ वैदेहस्त्वथकौश
ल्यंप्रवेश्यगृहमंजसा पाद्यार्घ्यमधुपर्कैस्तंपूजार्हंप्रत्यपूजयत् २७ ददौदुहितरंचास्मैरत्नानिवि
विधानिच एषराज्ञांपरोधर्मोह्यनित्यौजयपराजयौ २८ इतिशांतिपर्वणिराजधर्मेकालकहृ
तीये १०५ युधिष्ठिरउ० ब्राह्मणक्षत्रियविशांशूद्राणांचपरंतप धर्मोवृत्तंचवित्तंचवृत्त्युपायाः
फलानिच १ राज्ञांवृत्तंचकोशश्चकोशसंजननंजयः अमात्यगुणवृत्तिश्चप्रकृतीनांचवर्द्धनं
२ षाड्गुण्यगुणकल्पश्चसेनावृत्तिस्तथैवच परिज्ञानंचदुष्टस्यलक्षणंचसतामपि ३ समही
नाधिकानांचयथावल्लक्षणंचयत् मध्यमस्यचतुष्टस्यर्थंयथास्थेयंविवर्द्धता ४ क्षीणग्रह
णवृत्तिश्चयथाधर्मंप्रकीर्तितं लघुनादेशरूपेणग्रंथयोगेनभारत ५ विजिगीषोस्तथावृत्त
मुक्तंचैवतथैवतथैवते गणानांवृत्तिमिच्छामिश्रोतुंमतिमतांवर ६ यथागणाःप्रवर्द्धंतेनभिद्यं
तेचभारत अरींश्चविजिगीषंतेसुहृदःप्राप्नुवंतिच ७ ॥

काच लघुनागमेन आदेशरूपेणउपदेशात्मकेन ५ गणानांशूरजनस्तोमानां ६ ७ ॥

श्री·
शां·रा·
टी·
२·३

८ ९ एकोराजालोभंवृणुते गणास्तदास्मर्षंनददातीत्यमर्षंवृणुते ९ इतरेतरंगणाराजानश्चप्रकर्षयंति १०

भेदमूलोविनाशोहिगणानामुपलक्षये मंत्रसंवरणंदुःखंबहूनामितिमेमतिः ८ एतदिच्छाम्यहंश्रोतुंनिखिलेनपरंतप यथाचतेनभिद्येरंस्तच्चमेवदपार्थिव ४ भीष्मउ· गणानांचकुलानांचराज्ञांभरतसत्तम वैरसंदीपनावेतौलोभामर्षौनराधिप ५ लोभमेकोहिवृणुतेततामर्षमनंतरं तौक्षयव्ययसंयुक्तावन्योन्यंचविनाशिनौ ६ चारमंत्रबलादानैःसामदानविभेदनैः क्षयव्ययभयोपायैःकर्षयंतीतरेतरं १२ तत्रादानेनभिद्यंतेगणाःसंघातवृत्तयः भिन्नाविमनसःसर्वेगच्छंत्यरिवशंभयात १३ भेदेगणाविनश्युर्हिभिन्नास्तुसुजयाःपरैः तस्मात्संघातयोगेनप्रयतेरन्गणाःसदा १४ अर्थाह्येवाधिगम्यंतेसंघातबलपौरुषैः बाह्याश्चमैत्रींकुर्वंतितेषुसंघातवृत्तिषु १५ ज्ञानवृद्धाःप्रशंसंतिशुश्रूषंतःपरस्परं विनिवृत्ताभिसंधानाःसुखमेधंतिसर्वशः १६ धर्मिष्ठान्व्यवहारांश्चस्थापयंतश्चशास्त्रतः यथावत्प्रतिपश्यंतोविवर्द्धंतेगणोत्तमाः १७ पुत्रान्भ्रातृन्निगृह्णंतोविनयंतश्चतान्सदा विनीतांश्चप्रगृह्णंतोविवर्द्धंतेगणोत्तमाः १८ चारमंत्रविधानेषुकोशसंनिचयेषुच नित्ययुक्तामहाबाहोवर्द्धंतेसर्वतोगणाः १९ ॥

१३ संघातयोगेनएकेमत्यप्रयोगेण १४ १५ निवृत्ताभिसंधानाःविघटितसंघाः १६ १७ १८ १९ ॥

२·३

२० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ गणावृत्तंसप्तशततमः ९७ ॥

प्राज्ञान्शूरान्महोत्साहान्कर्मसुस्थिरपौरुषान् मानयंतःसदायुक्ताविवर्द्धंतेगणान्नृप
२० द्रव्यवंतश्चशूराश्चशास्त्रज्ञाःशास्त्रपारगाः कृच्छ्रास्वापत्सुसंमूढान्गणाःसंतारयंतिते
२१ क्रोधोभेदोभयंदंडःकर्षणंनिग्रहोवधः नयन्त्यरिवशंसद्योगणान्भरतसत्तम २२ त
स्मान्मानयितव्यास्तेगणमुख्याःप्रधानतः लोकयात्रासमायत्ताभूयसीतेषुपार्थिव २३ मंत्र
गुप्तिःप्रधानेषुचारश्चामित्रकर्शन नगणाःकृत्स्नशोमंत्रंश्रोतुमर्हंतिभारत २४ गणमुख्यैस्तु
संभूयकार्यंगणहितंमिथः पृथग्गणस्यभिन्नस्यविततस्यततोन्यथा २५ अर्थाःप्रत्यवसीदं
तितथानर्थाभवंतिच तेषामन्योन्यभिन्नानांस्वशक्तिमनुतिष्ठतां २६ निग्रहःपंडितैःकार्यःक्षि
प्रमेवप्रधानतः कुलेषुकलहाजाताःकुलवृद्धैरुपेक्षिताः २७ गोत्रस्यनाशंकुर्वंतिगणभेद
स्यकारकं आभ्यंतरंरक्ष्यमसारंबाह्यतोभयं २८ आभ्यंतरंभयंराजन्सद्योमूलानिकृंतति अका
स्मात्क्रोधमोहाभ्यांलोभाद्वापिस्वभावजात् २९ अन्योन्यंनाभिभाषंतेतत्पराभवलक्षणं जात्याच
सदृशाःसर्वेकुलेनसदृशास्तथा ३० नचोद्योगेनबुद्ध्यावारूपद्रव्येणवापुनः भेदाच्चैवप्रदानाच्च
भिद्यंतेरिपुभिर्गणाः ३१ तस्मात्संघातमेवाहुर्गणानांशरणंमहत् ३२ इतिशांतिपर्वणिराजध

श्री॰
शां॰रा॰
टी॰
२०५

नीतिप्रधानान्राजधर्मानुक्त्वा तदनुग्राहकान् शुद्धधर्मानाह महानित्यादिना १ २ ३ हत्याप्नुज्ञया ८ ९ अतिशा

युधिष्ठिर उ॰ महानयं धर्मपथो बहुशाखश्च भारत किंस्विदेवेह धर्माणामनुष्ठेयतमं मतं १
किं कार्यं सर्वधर्माणां गरीयो भवतो मतं यथाहं परमं धर्ममिह चैव प्रेत्य चाप्नुयां २ भीष्म उ॰ माता
पित्रोर्गुरूणां च पूजा बहुमता मम इह युक्तो नरो लोकान्यशश्च महदश्नुते ३ यच्च तेभ्यनुजानीयुः
कर्म तात सुपूजिताः धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ४ न च तैरभ्यनुज्ञातो धर्ममन्यं समा
चरेत् यं च तेभ्यनुजानीयुः स धर्म इति निश्चयः ५ एत एव त्रयो लोका एत एवाश्रमास्त्रयः एत ए
व त्रयो वेदा एत एव त्रयोग्नयः ६ पिता वै गार्हपत्योग्निर्माताग्निर्दक्षिणः स्मृतः गुरुराहवनीय
स्तु साग्नित्रेता गरीयसी ७ त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकानवजेष्यसि पितृवृत्त्या त्विमं लोकं मातृ
वृत्त्या तथापरं ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ८
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहत्फलं नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत् ९ नित्यं प
रिचरेच्चैव तद्वै सुकृतमुत्तमं कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे राजसत्तम १० सर्वे तस्यादृता लो
का यस्यैते त्रय आदृताः अनादृतास्तु यस्यैते सर्वास्तस्याऽफलाः क्रियाः ११ ॥

२०५

येत् भोगेषु क्रियास्वथवा स्वस्याधिक्यं न दर्शयेत् १० ११ १२ ॥

१२ १८ जातिर्जन्म १९ अवध्येतिसार्द्धः चानुगः तत्र वध्यानामपि तेषां अवध्यं कृत्वा ते अपराधिनोपि पितृमातृगुरवः अव
येन राजानमिवैनेन दूषयंति राजा हि वध्यानामवध्ये दुष्यति तद्वत् इत्यर्थः धर्माय उद्यतानामपि पित्रादीनां पालनाय यतमा

नचायं न परो लोकस्तस्य चैव परंतप अमानिता नित्यमेव यस्यैते गुरवस्त्रयः १३ न चास्मिन्न परे लो
के यशस्तस्य प्रकाशते न चान्यदपि कल्याणं पारत्र समुदाहृतं १४ तेभ्य एव हि यत्सर्वं कृत्वा तात च वि
सृजाम्यहं तदासीन्मे शतगुणं सहस्रगुणमेव च १५ तस्मान्मे संप्रकाशंते त्रयो लोका युधिष्ठिर द
शैव तु सदाचार्यः श्रोत्रियानतिरिच्यते १६ दशाचार्याननुपाध्याय उपाध्यायान्पिता दश पितॄन्दा
श तु माता एका सर्वां वा पृथिवीमपि १७ गुरुत्वेनाति भवति नास्ति मातृसमो गुरुः गुरुर्गरीयान्पितृ
तो मातृतश्चेति मे मतिः १८ उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः शरीरमेव सृजतः पिता माता
च भारत आचार्यशिष्टा या जातिः सा दिव्या साजरामरा १९ अवध्या हि सदा माता पिता चाप्यपका
रिणौ न संदुष्यति तत्कृत्वा न च ते दूषयंति तं धर्माय यतमानानां विदुर्देवा महर्षिभिः २० यश्चावृ
णोत्यवितथेन कर्मणा ऋतं ब्रुवन्नमृतं संप्रयच्छन् तं वै मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कृतम
स्य जानन् २१

नात्र देवा अप्यनुग्राह्यत्वेन विदुः २० आवृणोति प्रत्युत्पत्ति कर्मणा प्रवचनेन ऋतं वेदं २१ ॥

श्री· शां·रा· टी· २५

नाद्रियंते येते प्रत्यासन्नाविपर्ययेण विशीर्णा नष्टा भवंति २२ २३ अनिर्देशेन विस्तरेणानत्र निर्देशमात्ररूपेण अनुस्तय

विद्यां श्रुत्वा ये गुरुं नाद्रियंते प्रत्यासन्ना मनसा कर्मणा वा तेषां पापं भ्रूणहत्याविशिष्टं नान्यस्तेभ्यः पा
पकृदस्ति लोके २२ यथैव ते गुरुभिर्भावनीयास्तथा तेषां गुरवोप्यर्चनीया २३ तस्मात्पूजयितव्या
श्च संविभज्याश्च यत्नतः गुरवोर्चयितव्याश्च पुराणं धर्ममिच्छता २४ येन प्रीणाति पितरं तेन प्रीतः
प्रजापतिः प्रीणाति मातरं येन पृथिवी तेन पूजिता २५ येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितं मा
तृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः २६ ऋषयश्च हि देवाश्च प्रीयंते पितृभिः सह पूज्यमानेषु गुरुषु
तस्मात्पूज्यतमो गुरुः २७ केनचिन्न च वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् न च माता न च पिता मन्यते यादृशो गुरुः
२८ न तेवमानमर्हंति न तेषां दूषयेत्कृतं गुरूणामेव सत्कारं विदुर्देवा महर्षिभिः २९ उपाध्यायं पितरं
मातरं च येभिद्रुह्यंते मनसा कर्मणा वा तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ३०
भृतो वृद्धो यो न बिभर्ति पुत्रः स्वयोनिजः पितरं मातरं च तद्वै पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पाप
कृदस्ति लोके ३१ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुमः

एकीकृत्य एतत्सारभूतं २४ ३३ अष्टोत्तरशततमः ९८ ॥ ३२ एतत्सर्वमनिर्देशेनैवमुक्तं यत्कर्तव्यं पुरुषेणेह लोके

कथं सत्यानृतयोर्धर्माधर्मरूपत्वे हिंसाऽहिंसायुक्तयोस्तयोर्वैपरीत्यदर्शनात्संशय इत्यर्थः १ उभयोस्त्यागस्तत्रा तिदुष्कर इत्याह सत्यमिति लोकान्संसारिणः २५ तादृशः सत्यानृतयोस्तत्त्वमजानन् बालत्वाद्बध्यते यत्र विषये यत्रा हिंसापकारादौ सत्यं प्रतिष्ठितं न निष्ठायुक्तं तेन सत्यानृते बहूपकारप्रधाने निश्चिन्वन् धर्मवित् भवति ६ ग्रंथसमाप्ता ॥

युधिष्ठिर उ० कथं धर्मे स्थातुमिच्छन्नरो वर्त्तेत भारत विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ १ सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः २ किंस्वित्सत्यं किमनृतं किंस्विद्धर्म्यं सनातनं कस्मिन्काले वदेत्सत्यं कस्मिन्कालेऽनृतं वदेत् ३ भीष्म उ० सत्यस्य वचनं साधु न सत्याद्विद्यते परं यत्तु लोकेषु दुर्ज्ञानं तत्प्रवक्ष्यामि भारत ४ भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् यत्रानृतं भवेत्सत्यं सत्यं वाप्यनृतं भवेत् ५ तादृशो बध्यते बालो यत्र सत्यमनिष्ठितं सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ६ अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः सुमहत्प्राप्नुयात्पुण्यं बलाकोंधवधादिव ७ किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् सुमहत्प्राप्नुयात्पापं गंगायामिव कौशिकः ८

चक्षुः सर्वप्राणिवधाय योद्यतस्य वधात् बलाकः व्याधः हिंस्रस्व भावोपि स्वर्गं जगामेति कर्णपर्वकथा उत्तमेयया ७ मूढः कर्णपर्वोक्तः सत्यवादी चोरेभ्यः सत्यवचनाभिमानित्वान्मार्गेशुप दिश्य कार्पटिकान्घातितवान् अतोऽयमधर्मविदित्यर्थः कौशिक उलूकः गंगातीरे महद्रवशः सर्पिण्या स्थापितानंडानि भि

श्री॰
शां॰ रा॰
टी॰
२९

सुदुर्लभो दुर्विवेकः अत्र धर्मलक्षणो व्यवस्यतीति निश्चिनोतीति १ प्रभवोऽभ्युदयः अहिंसा अपीडनं धारणं संरक्षणं
एतत्त्रयं येन सत्येनानृतेन वा स्फुटीतेनावायतो भवति स धर्म इत्यादृत्तिभिः प्रभवेति ९ १२ श्रुतीति श्रुत्युक्तोऽर्थः सर्वो धर्म
इत्यपि न श्येनादेर्धर्मत्वाभावात् फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते केवलं प्रीतिहेतुत्वात्तद्धर्म इति कथ्यत इति वचना

तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्लभः दुष्करः प्रतिसंख्यातुं तत्केनात्र व्यवस्यति ८ प्रभवार्थाय
भूतानां धर्मप्रवचनं कृतं यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ९ धारणाद्धर्ममित्याहु
र्धर्मेण विधृताः प्रजाः यस्माद्धारणसंयुक्तः स धर्म इति निश्चयः ११ अहिंसार्थाय भूतानां धर्मप्रव
चनं कृतं यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः १२ श्रुतिर्धर्म इति ह्येके नेत्याहुरपरे जनाः न
च तत्प्रत्यसूयामो न हि सर्वं विधीयते १३ येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कस्यचित् तेभ्यस्तन्न त
दाख्येयं स धर्म इति निश्चयः १४ अकूजनेन चेन्मोक्षो नावकूजेत्कथंचन अवश्यं कूजितव्ये वा
शंकेरन्वाप्यकूजनात् १५ श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितं यः पापैः सह संबन्धान्मु
च्यते शपथादपि १६

तु श्येनादिफलस्य शत्रुवधादेरनर्थत्वाच्चोदनालक्षणाच्च धर्म इत्यर्थः सर्वं श्येनाद्यपि विधीयते धर्म
त्वेन चोद्यते १३ य इति अन्यायेनेति च्छेदः जिहीर्षन्तो हर्तुमिच्छन्तस्तेभ्यश्चोरेभ्यो धनिकं न ज्ञापयेत् भिद्येत तेभ्यस्तं ज्ञापयेदेवेत्यर्थः १४ अकूजनेनेति
चोरेषु धनिकं पृच्छत्सु तं न वदेत् अवदतो मोक्षाभावेन वक्ष्यतीति शपथपूर्वकमपि वदेत् तादृशस्थले अनृतदोषो नास्तीति श्लोकद्वयार्थः

॥ २९

नेति तेभ्यः स्तेनेभ्यः अपिदेयंनर्थे ७ स्वातिसाईः यदाधनंत्वदीयंश्रमोमदीयः लाभस्तूभाभ्यांविभज्यग्राह्य इतिनियमपूर्वकंप्र
वृत्तेऽधर्मार्गचोरादिनाधननाशः स्यात्तदाउत्तमर्णः अधमर्णस्यशरीरोपरोधेनदासीकरणेनधनमादातुमिच्छतिचेत्तत्सवाक्ये
सत्यसंप्रतिपन्नार्थसंवादार्थमाह तुलाः साक्षिणोवाच्यवक्तायोग्यवचोनुक्ताशानंतूष्णांधारयतीत्येवनिश्चयवादिनात् ८ यदाधन
मर्णोधनवानुत्तमर्णास्तुक्षीणस्तदानदस्यदृतेनदोषायेत्याहप्राणेति ९ इदंशास्यलेवेषांतेषांपिपरकीयमर्थंरत्नेदित्याह

नतेभ्योपिधनंदेयंशक्येसतिकथंचन पापेभ्योहिधनंदत्तंदातारमपिपीडयेत् २७ स्वशरीरोपरो
धेनधनमादातुमिच्छतः सत्यसंप्रतिपन्नार्थंयद्ब्रूयुःसाक्षिणःक्वचित् २८ अनुक्तातत्रतद्वाक्येस
वैतेऽनृतवादिनः ९ प्राणात्ययेविवाहेचवक्तव्यमनृतंभवेत् १९ अर्थस्यरक्षणार्थायपरेषांधर्म
कारणात् परेषांसिद्धिमाकांक्षन्नीचःस्याद्धर्मभिक्षुकः ३ प्रतिश्रुत्यप्रदातव्यःस्वकार्यस्तुबला
त्कृतः यःकश्चिद्धर्मसमयात्प्रच्युतोधर्मसाधनः देहेनैवसंहर्तव्यंस्तंपन्थानंसमाश्रिताः ३ च्यु
तः स्वेदेवधर्मेभ्योमानवंधर्ममास्थितः शठःस्वधर्ममुत्सृज्यतमिच्छेदुपजीवितुं २२ ॥

र्थस्येति ३ यदितुउक्तविषयेपवलाभालाभौसमौउभाभ्यांविभज्यग्राह्यमितिप्रतिश्रुतंतदानाशितोऽर्थोऽधमर्णेनयथाभा
गंप्रदातव्यः अथवास्वकारीधनार्जनकारीअधमर्णोबलात्कृतउक्तरीत्यादासीकृतोप्यसौसचेत्कपटंकरोतितन्नष्टमपिधनं
नष्टमितिचेत्तत्राह यइति ३१ अमानवंप्राप्तवं शठःवंचकःतंअमानवं २२ ॥

यतनमेवश्रेयो न धर्म इत्यर्थः २३ २४ मा संगमः संगं माकार्षीः तत्र हेतुः अर्थेनेति विप्रयोजनं वियोगः एतदपि पापाः कुर्वंतीत्यर्थः २५
अयमिति पापानां पापिनां मध्ये वाच्यः उपदेशार्हः कश्चिदपि नास्ति किंतु सर्वैः धर्म इत्येव तेषां निश्चयः अधर्मको विस्फुरणाभावा

सर्वोपायैर्निहंतव्यः पापो निकृतिजीवनः यतनमित्येव पापानां सर्वेषामिह निश्चयः २३ अविष
ह्यास्संभोज्या निकृत्यायतनं वै गताः च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते २४ निर्यज्ञास्तपसा
हीना मास्म तैः सह संगमः यतनाशाद्दुःखितं जीविताद्विप्रयोजनं २५ अयं ते रोचतां धर्म इति वा
च्यः प्रयत्नतः न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः २६ न चैतान् हन्यमानो वा हन्यान्नासौ पापेन लिप्य
ते स्वकर्मणा हतं हंति हत एव स हन्यते तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु २७ यथा काकाश्च
गृध्राश्च तथैवोपधिजीविनः ऊर्ध्वं देहविमोक्षांते भवंत्येतासु योनिषु २८ यस्मिन्यथा वर्त्तते यो मनु
ष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः मायाचारो मायया वाधितव्यः साध्वाचारः साधुना प्रत्युपेयः २९
इति शांतौ राजधर्मे सप्ताशूजके ९ युधिष्ठिर· क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः दुर्गाण्य
तितरेयेन तन्मे ब्रूहि पितामह १ भीष्मउ· आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः वर्त्तंते संयतात्मानो दु
र्गाण्यतितरंति ते २ ॥

द्विन्याशयः २६ नचैतानिसार्द्धः समयं एतान्न हनिष्यामीति ब्रुवंतं यश्चिकीर्षेत स कुर्वीत नादृशा
णां वधे पुण्यमस्तीति भावः २७ २९ नवशततमः ९ क्लिश्य भूतेषु प्राणिषु दुर्गाणि दुस्तराणि १ २ ॥

विषयान्विषयार्थानिइंद्रियाणि ३ उच्यमानाः निंद्यमानाः ४ ७ रजसान्विताः संतोर्थाननयंतिनहरंति ११ अकुहकार्थानि

येदंभान्नाचरंतिस्मयेषांवृत्तिश्चसंयता विषयांश्चनिगृह्णंतिदुर्गाण्यतितरंतिते ३ प्रत्याहुर्नो
च्यमानायेनहिंसंतिचहिंसिताः प्रयच्छंतिनयाचंतेदुर्गाण्यतितरंतिते ४ वासयंत्यतिथीन्नि
त्यंनित्यंवायेनसूयकाः नित्यंस्वाध्यायशीलाश्चदुर्गाण्यतितरंतिते ५ मातापित्रोश्चयेवृत्तिंवर्त
तेधर्मकोविदाः वर्जयंतिदिवास्वप्नंदुर्गाण्यतितरंतिते ६ येवापापंनकुर्वंतिकर्मणामनसागि
रा निक्षिप्तदंडाभूतेषुदुर्गाण्यतितरंतिते ७ येनलोभान्नयंत्यर्थान्राजानोरजसान्विताः वि
षयान्परिरक्षंतिदुर्गाण्यतितरंतिते ८ स्वेषुदारेषुवर्त्तंतेन्यायवृत्तावृतावृतौ अग्निहोत्रपराःसंतोदु
र्गाण्यतितरंतिते ९ आहवेषुचयेशूरास्त्यक्त्वामरणजंभयं धर्मेणजयमिच्छंतिदुर्गाण्यतितरं
तिते १० येवदंतीहसत्यानिप्राणत्यागेप्युपस्थिते प्रमाणभूताभूतानांदुर्गाण्यतितरंतिते ११ क
र्माण्यकुहकार्थानियेषांवाचश्चसूनृताः येषामर्थाश्चसंबद्धादुर्गाण्यतितरंतिते १२ अनध्यायेषु
येविप्राःस्वाध्यायंनेहकुर्वते तपोनिष्ठाःसुतपसोदुर्गाण्यतितरंतिते १३ येतपश्चतपस्यंतिकौ
मारब्रह्मचारिणः विद्यावेदव्रतस्नातादुर्गाण्यतितरंतिते १४ येचसंशांतरजसःसंशांततमसा

अदंभार्थानि १२ ४ ५ ॥ सत्ये संस्थितामहात्मानोदुर्गाण्यतितरंतिते १५ ॥

श्री॰
शां॰ रा॰
टी॰
२८

१६ १७ १८ १९ २० २१ २२ यात्रार्थंजीवनार्थं २३ २४ २५ २६ तवचहितेस्थितः २७ ॥

येषांनकश्चित्त्रसतिनत्रसंतिहिकस्यचित् येषामात्मसमोलोकोदुर्गाण्यतितरंतिते १६ परिग्र
यान्नतप्यंतियेसंतः पुरुषर्षभाः ग्राम्यादर्थान्निवृत्ताश्चदुर्गाण्यतितरंतिते १७ सर्वान्देवान्नमस्यंति
सर्वधर्मांश्चशृण्वते येश्रद्दधानाःशांताश्चदुर्गाण्यतितरंतिते १८ येनमानित्वमिच्छंतिमानयंतिच
येपरान् मान्यमानान्नमस्यंतिदुर्गाण्यतितरंतिते १९ येचश्राद्धानिकुर्वंतितिथ्यांतिथ्यांप्रजार्थिनः
सुविशुद्धेनमनसादुर्गाण्यतितरंतिते २० येक्रोधंसंनियच्छंतिक्रुद्धान्संशमयंतिच नचकुप्यंतिभूता
नांदुर्गाण्यतितरंतिते २१ मधुमांसंचयेनित्यंवर्जयंतीहमानवाः जन्मप्रभृतिमद्यंचदुर्गाण्यतितरं
तिते २२ यात्रार्थंभोजनंयेषांसंतानार्थंचमैथुनं वाक्सत्यवचनार्थायदुर्गाण्यतितरंतिते २३ ई
श्वरंसर्वभूतानांजगतःप्रभवाप्ययं भक्तानारायणंदेवंदुर्गाण्यतितरंतिते २४ यएषपद्मरक्ताक्षः
पीतवासामहाभुजः सुहृद्भ्राताचमित्रंचसंबंधीचतथाच्युतः २५ यइमान्सकलाँल्लोकान्चर्म
वत्परिवेष्टयेत् इच्छन्प्रभुरचिंत्यात्मागोविंदःपुरुषोत्तमः २६ स्थितःप्रियहितेजिष्णोःसएषपुरु
षोत्तमः राजंस्तवचदुर्धर्षोवैकुंठःपुरुषर्षभः २७ ॥

२८ २९ कृत्यसमुद्देशः कीर्त्तमलेशः ३० दशशततमः ९९ असौम्याः १ २ ३ ४ ५ ६ ७ ८ ॥

यएनं संश्रयंतीह भक्त्या नारायणं हरिं तेतरंतीह दुर्गाणि न चात्रास्ति विचारणा २८ दुर्गा
तितरणं ये च पठंति श्रावयंति च कथयंति च विप्रेभ्यो दुर्गाण्यतितरंति ते २९ इति कृत्यस
मुद्देशः कीर्तितस्ते मयानघ तरंते येन दुर्गाणि परत्रेह च मानवाः ३० इति शांतिपर्वणि राजध
र्मे दुर्गातितरणं ९९ युधिष्ठिर० असौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शनाः ईदृशान्पुरुषा
न्तात कथं विद्यामहे वयं १ भीष्म उवाच अत्राप्युदाहरंतीममितिहासं पुरातनं व्याघ्रगोमा
युसंवादं तन्निबोध युधिष्ठिर २ पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः परहिंसारुचिः क्रूरो
बभूव पुरुषाधमः ३ स त्वायुषि परिक्षीणे जगामानीप्सितां गतिं गोमायुत्वं च संप्राप्तो दूषितः पू
र्वकर्मणा ४ संस्मृत्य पूर्वभूतिं च निर्वेदं परमं गतः न भक्षयति मांसानि परैरुपहृतान्यपि ५
अहिंस्रः सर्वभूतेषु सत्यवाक्सुदृढव्रतः स चकार यथाकालमाहारं पतितैः फलैः ६ श्मशा
ने तस्य वासो गोमायोः संमतो भवत् जन्मभूम्यनुरोधाच्च नान्यवासमरोचयत् ७ तस्य शौ
चममृष्यंतस्ते सर्वे सहजातयः चालयंति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ८ ॥

श्री० शां० रा० टी० २८

विप्रतिपत्तिर्विपरीता बुद्धिः ४ ५ प्रस्तैः विस्तृतैः ९ १४ अनुबंधे परिणामे १५ अप्रत्ययः असंतोषः तेन हृतां अर्थापनयः

वसन्नपि त्वं वने रौद्रे शौचे वर्तितुमिच्छसि इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ४ तत्समानो
भवास्माभिर्भोज्यदासा महे वयं भक्ष्यशौचं परित्यज्य यद्विभुंक्ष्व तदा सह ते ५ इति तेषां वचः श्रुत्वा स
त्वं वाच समाहितः मधुरैः प्रस्तैर्वाक्यैर्हेतुमद्भिरनिष्टुरैः ६ अस्मा[illegible]ण प्रकृतिर्मे शीलतः क्रियते
कुले प्रार्थयामि च तत्कर्म येन विस्तीर्यते यशः ७ श्मशाने यदि मे वासो समाधिर्मे निशाम्यतां
आत्मा फलति कर्माणि नाश्रमो धर्मकारणं ८ आश्रमे यो द्विजं हन्याद्गां वा दद्यादनाश्रमे किं न
तत्पातकं न स्यात्तद्दानं वृथा भवेत् ९ भवंतः स्वार्थलोभेन केवलं भक्षणे रताः अनुबंधे न ये दो
षास्तान्न पश्यंति मोहिताः १० अप्रत्ययहृतां गर्हामर्थापनयदूषितां इह चामुत्र चानिष्टां तस्मा
द्वृत्तिं न रोचये ११ तं शुचिं पंडितं मत्वा शार्दूलः ख्यातविक्रमः कृत्वात्मसदृशीं पूजां साचिव्ये वरयत्स्व
यं १२ शार्दूल उ० सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह व्रियंतामीप्सिता भोगाः परिहार्या
श्च पुष्कलाः १३ तीक्ष्णा इति वयं ख्याता भवंतं ज्ञापयामहे मृदुपूर्वं हितं चैव श्रेयश्चाधिगमिष्यसि ॥ १४

धर्महानिः १६ ७ यात्रां राजकार्यं गच्छ भागुहि परिहार्या अश्वानीप्सिताः परिहार्याः परिच्छेद्याः इत्यन्ये ९ ज्ञापयामहे सूचयामहे

॥ २८ ॥

मंदंतरे मनिमित्तं २१ २४ योत्पतियोगं प्राप्स्यति मदंतरे मनिमित्तं दुःशीलाश्च भविष्यंति २५ अत्रहेतमाहनेति पशामंदंस्ना

गोमायुरुवाच सदृशं मृगराजैतत्तववाक्यं मदंतरे यत्सहायान्मृगयसे धर्मार्थकुशला
न्नृपतीन् २१ नशक्यंह्यनमात्येन महत्वमनुशासितुं दुष्टामात्येन वावीर शरीरपरिपंथिना
२२ सहायाननुरक्तांश्च नयज्ञानुपसंहितान् परस्परमसंसृष्टान्विजिगीषूनलोलुपान् २३
अनतीतोपधान्प्राज्ञान्हितेयुक्तान्मनस्विनः पूजयेथा महाभाग यथाचार्यान्यथापितॄन् २४
नत्वेवममसंतोषाद्रोचतेन्यन्मृगाधिप नकामयेसुखान्भोगानैश्वर्यं च त्वदाश्रयं २५ नयोक्ष्य
तिहि मे शीलं तव भृत्यैः पुरातनैः तेत्वां विभेदयिष्यंति दुःशीलाश्च मदंतरे २६ नसंश्रयः श्लाघ
नीयो ह्यन्येषामपि भास्वतां २६ कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः दीर्घदर्शी महोत्सा
हः स्थूललक्षो महाबलः २७ कृतार्थश्चामोघकर्तासि भाविभिश्च समलंकृतः नसुलभ्यतास्मि संतु
ष्टो दुःखावृत्तिरनुष्ठिता २८ सेवायां चापि नाभिज्ञः स्वच्छंदेन वनेचरः राजोपक्रोशदोषाश्च सर्वे
संश्रयवासिनां व्रतचर्यातुनिःसंगा निर्भया वनवासिनाम् २९ नृपेणाहूयमानस्य यत्तिष्ठति भ
यं हृदि ३० नतत्तिष्ठति तुष्टानां वने मूलफलाशिनां पानीयं वा निरायासं स्वादन्नं वा भयोत्तरं ३१

वनीयो नास्मीति द्वयोः संबंधः २६ स्थूललक्षो बहुप्रदः २७ दुःखावृत्तिः सेवावृत्तिश्चनानुष्ठिता २८ राजसमीपे उपक्रोशो निंदा न

निर्हृतिः स्वर्वं ३१ शिष्टाः कृतदण्डाः ३२ ३३ ३४ ३५ ३७ व्याघ्रयोनितः व्याघ्रयोनेः व्याघ्रस्येत्यर्थः ३८ ३९ ४० ४१ ४२॥



विचार्य स्वल्पं पश्यामि तत्त्वं त्वयि यत्र निर्वृतिः ३१ अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः उपवा
तैर्यथा भृत्या दूषिता नियतं गताः ३२ यदि त्वेतन्मया कार्यं मृगेन्द्र यदि मन्यसे समयं कृतमिच्छामि
वर्तितव्यं यथा मयि ३३ मदीया माननीयास्ते श्रोतव्यं च हितं वचः कल्पिता या च मे वृत्तिः सा भवेत्त्वयि
सुस्थिरा ३४ न मन्त्रयेयमन्यैस्ते सचिवैः सह कर्हिचित् नीतिमन्तः परीप्सन्तो हत्या ब्रूयुः परे मयि ३५
एक एकेन संगम्य रहो ब्रूयाद्धितं वचः न च ते ज्ञातिकार्येषु प्रष्टव्योऽहं हिताहिते ३६ मया संमन्त्र्य पश्चा
त्त्वं न हिंस्याः सचिवास्त्वया मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ३७ एवमस्त्विति तेनासौ मृगेन्द्रे
णाभिपूजितः प्राप्तवान्मतिमान्साचिव्यं गोमायुर्व्याघ्रयोनितः ३८ तं तथा सत्कृतं दृष्ट्वा पूज्यमानं स्वक
र्मसु प्राद्विषन्कृतसंघाताः पूर्वभृत्याः सुहुर्मुहुः ३९ मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रसाद्य च दो
षेष्वस्य समतां नेतुमैच्छन्नशुभबुद्धयः ४० अन्यथा ह्युषिताः पूर्वं परद्रव्यापहारिणः अशक्ताः किं
चिदादातुं द्रव्यं गोमायुयन्त्रिताः ४१ व्युत्थानं च विकाङ्क्षद्भिः कथाभिः प्रतिलोभ्यते धनेन महता चैव
बुद्धिरस्य विलोभ्यते ४२ न चापि स महाप्राज्ञस्तस्माद्धैर्याच्चचाल ह अथास्य समयं कृत्वा विनाशाय

तस्य गोमायोर्वेशानि ४४ तस्य गोमायोस्तच्छिद्रमिति तेन च तन्मर्षितं कारणार्थं स्वस्वसंबंधविच्छेदो भवतीति हेतोरित्यर्थः ४५ ५० वर्णि

ईप्सितं तत्सटेंगेंद्रस्य मांसं यत्तत्र संस्कृतं अपनीय स्वयं तच्छिद्रैर्न्यस्तं तस्य वेश्मनि ४४ यदर्थं चाप्युपह
तं येन तत्त्वेव मंत्रितं तस्य तच्छिद्रं सर्वकारणार्थं च मर्षितं ४५ समयेयायं कृतस्तस्तेन साचिव्यमनुपराक्र
ता नोपघातस्त्वया कार्यो राजन्मैत्रीमिहेच्छता ४६ भीष्मउ· त्वथितस्य शृगेंद्रस्य भोक्तुमभ्युत्थित
स्य च भोजनायोपहृतं यत्तन्मांसं नोपदृश्यते ४७ मृगराजेन चात्तमं दृश्यतां चौरस्तस्तत कृतं केना
पितं मांसं शृगेंद्रायोपवर्णितं ४८ सचिवेनापनीतं तद्विदुषा शास्त्रमानिना सरोषस्तत्र शार्दूलः
कृतवां गोमायुचापलं ४९ बभूवामर्षितो राजा वधं चास्य व्यरोचयत् छिद्रं तेन तस्य तद्दृष्ट्वा प्रोचुस्ते
पूर्वमंत्रिणः ५० सर्वेषामेव सोस्माकं हृत्तिभंगे प्रवर्त्तते निश्चित्यैवं पुनस्तस्य तेन तत्कर्म्माणि वर्णयत्
५१ इदं तस्येदृशं कर्म्म किं तेन न कृतं भवेत् कृतं स्वामिना पूर्वं यादृशो नैव तादृशः ५२ वाङ्मात्रे
णैव धर्मिष्ठः स्वभावेन तु दारुणः धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः ५३ कार्यार्थं भोजना
र्थेषु व्रतेषु कृतवान् श्रमं यदि विप्रत्ययोस्माकं तदिदं दर्शयामते ५४ तन्मांसं चैव गोमायोस्तैः त्व
णादाशु गृहेक्षिप्तं मांसापनयनं ज्ञात्वा व्याघ्रः श्रुत्वा च तद्वचः ५५ ॥

यत् अवर्णयत् ५१ ५३ विप्रत्ययः अविश्वासः ५४ गोमायोर्गृहे प्रक्षिप्तं प्रवेशितं मांसं प्रदर्शयामास इत्यर्थः ५५ ॥

श्री·
पं·त·
टी·
३१

५५ ५६ कर्मनग्राह्यंसंवर्षजैः स्पर्द्धास्थैः ५७ प्रक्रियाप्रक्रष्टंकर्म ५८ ६३ तलवत्प्रवाल्मवकटाहगर्भवत् ६४ ६५ प्रभव

आज्ञापयामासतदागोमायुर्वध्यतामिति शार्दूलस्यवचःश्रुत्वाशार्दूलजननीततः ५५ स्तनराजंहि
नैवीकैःसंबोधयितमागमत् पुत्रनैतत्त्वयाग्राह्यंकपटारंभसंयुतं ५६ कर्मसंवर्षजैर्दोषैर्दुष्टेनाशु
चिभिःशुचिः नोच्छ्रितंमहतेकश्चित्प्रक्रियावैरकारिका ५७ शुचेरपिहियुक्तस्यदोषएवनिपात्यते
मुनेरपिवनस्थस्यस्वानिकर्माणिकुर्वतः ५८ उत्पद्यतेत्रयःपक्षामित्रोदासीनशत्रवः लुब्धानांशुचा
योद्वेष्याःकातराणांतरस्विनः ५९ मूर्खाणांपंडिताद्वेष्यादरिद्राणांमहाधनाः अधार्मिकाणांधर्मि
ष्ठाविरूपाणांसुरूपिणः ६० बहवःपंडितामूर्खालुब्धामायोपजीविनः कुर्युर्दोषमदोषस्यबृहस्पतिम
तेरपि ६१ शून्यात्नचगृहात्मांसंयद्यप्यपहृतंतव नेच्छतेदीयमानंचसाधुतावह्निदृश्यतां ६२ असभ्याः
सभ्यसंकाशाःसभ्याश्चासभ्यदर्शनाः दृश्यतेविविधाभावास्तेषुयुक्तंपरीक्षणं ६३ तलवद्दृश्यतेव्योमख
द्योतोहव्यवाडिव नचैवास्तितलंव्योम्निखद्योतेनहुताशनः ६४ तस्मात्प्रयत्नदृष्टोपियुक्तोऽस्यार्थः
परीक्षितुं परीक्ष्याज्ञापयन्नर्थान्नपश्चात्परितप्यते ६५ नदुष्करमिदंपुत्रयत्प्रभुर्ज्ञातयेत्परं श्लाघनीयाय १११
शस्याचलोकेप्रभवतांक्षमा ६६ ॥

तांप्रभूणां ६६ ॥

६७ ६८ गोमायोश्चारः ६९ ७० प्रायंमरणार्थमुपवेशनंआसितंआचरितं ७१ ७४ उपहिताःवञ्चिताः ७५ प्रतारिताःत्वाविताः

स्थापितोयंत्वयापुत्रसामंतेष्वपिविश्रुतः दुःखेनासाध्यतेपात्रंधार्यतामेघतेस्वयं ६७ दूषितंपर
दोषैर्हिगृह्णीतेयोन्यथाशुचिं स्वयंसंदूषितात्मातुःक्षिप्रमेवविनश्यति ६८ तस्माद्दण्डविसर्जना
द्गोमायोःकश्चिदागतः धर्मात्मातेनचाख्यातंयथैतत्कपटंकृतं ६९ ततोविज्ञानचारित्रैःसत्कार्य
सविमानितः परिषत्कःसमस्तैर्हमृगेन्द्रेणपुनःपुनः ७० अनुज्ञाप्यमृगेन्द्रंतुगोमायुर्नीतिशास्त्र
वित् तेनामर्षेणसंतप्तःप्रायमासितुमैच्छत ७१ शार्दूलस्तत्रगोमायुंस्नेहात्प्रोत्फुल्ललोचनः अ
वारयत्सधर्मिष्ठःपूजयाप्रतिपूजयन् ७२ तंसगोमायुरालोक्यस्नेहादागतसंभ्रमं उवाचप्रणतो
वाक्यंबाष्पगद्गदयागिरा ७३ पूजितोहंत्वयापूर्वंपश्चाच्चैवविमानितः परेषामास्पदंनीतोवस्तुं
नार्हाम्यहंत्वयि ७४ असंतुष्टाश्च्युताःस्थानान्मानात्प्रत्यवरोपिताः स्वयंचापहृताभृत्यायेचाप्यु
पहिताःपरैः ७५ परिक्षीणाश्चलुब्धाश्चक्रुद्धाभीताःप्रतारिताः हृतस्वामानिनोयेचत्यक्तादा
नाम्महेप्सवः ७६ संतापिताश्चयेकेचिद्व्यसनौघप्रतीक्षिणः अंतर्हिताःसोपहितास्तेसर्वेपरसा
यनाः ७७ अवमानेनयुक्तस्यस्थानभ्रष्टस्यवापुनः कथंयास्यसिविश्वासमहंतिष्ठामिवाकथं ७८ ॥

७६ अपरसाश्चअयनाश्चेतिअपरसायनाःप्रीतिशून्यानिर्धनाश्चेत्यर्थः ७७ ७८ ॥

श्री॰
शां॰ रा॰
टी॰
२२

७९ ८२ कश्चिदेवकश्चिदपिभर्तुर्हितेनदृश्यते किंतुवाणिज्यवद्भयार्थः स्नेहोनकेवलंभर्तृकार्यार्थः ८४ पुरुषज्ञा
नंसुदुःखंदुःखलभं यत्तएषांनृपाणांचित्तंचलाचलमस्थिरंगम्यतेज्ञायतेसुपुरुषज्ञानेंदुर्घटमित्यर्थः ८५ प्रक्रियमही।

समर्थइतिसंगृह्यस्थापयित्वापरीक्षितः कृतंचसमयंभित्वात्वयाहमवमानितः ७९ प्रथमंयःस
माख्यातःशीलवानितिसंसदि नवाच्यंतस्यवैगुण्यंप्रतिज्ञांपरिरक्षता ८० एवंचावमतस्येहविश्वा
संमेनयास्यति त्वयिचापेतविश्वासेममोद्वेगोभविष्यति ८१ शंकितस्त्वमहंभीतःपरिच्छिद्रानुदर्शिनः
अस्निग्धाश्चैवदुस्तोषाःकर्मचैतद्बहुच्छलं ८२ दुःखेनश्लिष्यतेभिन्नंश्लिष्टंदुःखेनभिद्यते भिन्नश्लि
ष्टातुयाप्रीतिर्नसास्नेहेनवर्तते ८३ कश्चिदेवहितेभर्तुर्दृश्यतेनपरात्मनोः कार्यापेक्षाहिवर्तंतेभावाः
स्निग्धाःसुदुर्लभाः ८४ सुदुःखंपुरुषज्ञानंचित्तंह्येषांचलाचलं समर्थोवाप्यशक्तोवाशतेष्वेकोधि
गम्यते ८५ अकस्मात्प्रक्रियानृणामकस्माच्चापकर्षणं शुभाशुभेमहत्वंचप्रकर्तुंबुद्धिलाघवं ८६
एवंविधंसांत्वमुक्त्वाधर्मकामार्थहेतुमत् प्रसादयित्वाराजानंगोमायुर्वनमभ्यगात् ८७ अगृह्यानुन
यंतस्यमृगेंद्रस्यचबुद्धिमान् गोमायुःप्रायमास्थायत्यक्त्वादेहंदिवंययौ ८८ इतिश्रीमहाभारते।
शांतिपर्वणिराजधर्मेव्याघ्रगोमायुसंवादः १११ ॥

करणंअकस्मात्कर्तुंबुद्धेर्लाघवंतच्छत्वमेवहेतुः ८६ प्रसादयित्वाप्रसाद्य ८७ अगृह्यअगृहीत्वा ८८ एकोदशाशततमः १११

किंपार्थिवेनेत्यध्यायोनीचोमहत्वंप्राप्यापिमौर्ख्यादालस्याच्चनश्यतीतिदर्शयति १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ ॥

युधिष्ठिर उ॰ किंपार्थिवेनकर्तव्यंकिंचकृत्वासुखीभवेत् एतदाचक्ष्वतत्त्वेनसर्वधर्मभृतांवर १
भीष्म उ॰ हंततेहंप्रवक्ष्यामिशृणुकार्यैकनिश्चयं यथाराज्ञेहकर्तव्यंयच्चकृत्वासुखीभवेत् २ न
चैववर्तितव्यंस्मयथेदमनुशुश्रुम उष्ट्रस्यसुमहद्वृत्तंतन्निबोधयुधिष्ठिर ३ जातिस्मरोमहानुष्ट्रःप्रा
जापत्ययुगेभवत् तपःसुमहदातिष्ठदरण्येसंशितव्रतः ४ तपसस्तस्यचांतेथप्रीतिमानभवा
द्विभुः वरेणाच्छंदयामासततश्चैनंपितामहः ५ उष्ट्र उवाच भगवंस्त्वत्प्रसादान्मेदीर्घाग्रीवाभवे
दियं योजनानांशतंसाग्रंगच्छामिचरितुंविभो ६ एवमस्त्वितिचोक्तःसवरदेनमहात्मना प्रति
लभ्यवरंश्रेष्ठंययावुष्ट्रःस्वकंवनं ७ सचकारतदालस्यंवरदानात्सुदुर्मतिः नचैच्छच्चरितुंगं
तुंदुरात्माकालमोहितः ८ सकदाचित्प्रसार्यैवतांग्रीवांशतयोजनां चचारश्रांतहृदयोवातश्चा
गात्ततोमहान् ९ सगुहायांशिरोग्रीवांनिधायपशुरात्मनः आस्तेथवर्षमभ्यागात्सुमहा
त्प्लावयज्जगत् १० अथशीतपरीतांगोजंबुकःक्षुच्छ्रमान्वितः सदारस्तांगुहामाशुप्रविवेशज
लार्दितः ११ सदृष्ट्वामांसजीवीतुसुभृशंक्षुच्छ्रमान्वितः अभक्षयत्ततोग्रीवामुष्ट्रस्यभरतर्षभ १२

श्री॰
शां॰ रा॰
टी॰
२१३

१३ १६ योगेन उपायेन एवंविधं आलस्यं १७ बाहुश्रुतिबाहूपलक्षितं शौर्यं जंघोपलक्षितं पादविहरणं भारो भारवहनं १८ आ

यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः तदा संकोचने यत्नमकरोद्भृशदुःखितः १३ यावदूर्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः तावत्तेन स दारुणो जंबुकेन समभक्षितः १४ स हत्वा भक्षयित्वा च तमुष्ट्रं जंबुकस्तदा विगते वातवर्षे तु निश्चक्राम गुहामुखात् १५ एवं दुर्बुद्धिना प्राप्तमुष्ट्रेणेति यथं तदा आलस्यस्य क्रमात्पश्य महान्तं दोषमागतं १६ त्वमप्येवं विधिं हित्वा योगेन नियतेन्द्रियः वर्तस्व बुद्धिमूलं तु विजयं मनुरब्रवीत् १७ बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत तानि जंघाजघन्यानि भारप्रत्यवराणि च १८ राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च आर्त्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत् गुह्यमन्त्रश्रुतवतः सुसहायस्य चानघ १९ परीक्ष्यकारिणो ह्यर्थास्तिष्ठन्तीह युधिष्ठिर सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुं २० इदं हि सद्भिः कथितं विधिज्ञैः पुरा महेन्द्रप्रतिमप्रभाव मयापि चोक्तं तव शास्त्रदृष्ट्या यथैव बुद्ध्वा प्रचरस्व राजन् २१ इति श्रीमहाभारते शान्तिपर्वणि राजधर्मे उष्ट्रग्रीवोपाख्यानं ११२ युधिष्ठिर उ॰ राजा राज्यमनुप्राप्य दुर्लभं भरतर्षभ अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः १ भीष्म उ॰ अत्राप्युदाहरन्तीममितिहासं पुरातनं सरितां चैव संवादं सागरस्य च भारत २ ॥

तस्य प्रतिलिप्सावतः १९ २१ अध्यायः ११२ राजा राज्यमिति अध्यायो बलवति रिपौ विनय एव श्रेयानित्यर्थः १ २ ॥

३ निहतान् उन्मूलितान् कायिनः महाशरीरान् अन्याहृतान् आनीतानिति शेषः ४ अकायः अल्पकायः ५ ७ पकति

स्ववारिनिलयः शंखसागरः सरितांपतिः पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ३
सागर उवाच समूलशाखान्पश्यामि निहतान्कायिनो द्रुमान् युष्माभिरिह पूर्णाभिर्न
घस्तत्र न वेतसः ४ अकायश्चाल्पसारश्च वेतसः कूलजश्च वः अवज्ञया वा नानीतः किंच वा ते
न वः कृतं ५ तदहं श्रोतुमिच्छामि सर्वासामेव वो मतं यथा चेमानि कूलानि छित्वा नायाति वेत
सः ६ तत्राह नदी गंगा वाक्यमुत्तममर्थवत् हेतुमद्ग्राहकं चैव सागरं सरितांपतिं ७ गंगोवा
च तिष्ठंत्येते यथास्थानं नगा ह्येकनिकेतनाः ते त्यजंति ततः स्थानं प्रातिलोम्यान्न वेतसः ८
वेतसो वेगमायांतं दृष्ट्वा नमति नापरः सरिद्वेगमतिक्रांते स्थानमासाद्य तिष्ठति ९ कालज्ञः स
मयज्ञश्च सदा वश्यश्च नोद्धतः अनुलोमस्तथा स्तब्धस्तेन नाभ्येति वेतसः १० मारुतोदकवेगा
न येन मंत्युन्नमंति च ओषध्यः पादपा गुल्मा न ते यांति पराभवं ११ भीष्म उ० यो हि शत्रोर्वि
वृद्धस्य प्रभावं ध्रुवं विनाशनं पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति १२ सारासारं बलं वीर्यमात्मनो
द्विषतश्च यः जानन्विचरति प्राज्ञो न स याति पराभवं एवमेव यदा विद्वान्मन्यते तिबलं रि

केनाः स्तब्धा आश्वर्थः प्रातिलोम्यात् अस्माकं प्रातिकूल्यात् ८ १२ वैतसीं वृत्तिं

संश्रयेद्वैतसीं वृत्तिमेतत्प्रज्ञानलक्ष

विद्वान् मूर्खश्चासौ प्रगल्भश्चेतेन १ सहते उक्तं २ क्रुश्यमाणस्याक्रोशतः मर्षीतितिक्षुः क्रुध्यति क्रोधवति ३ टिट्टिभं
टिट्टिभवत् उः अवं वाशमानं रटंतं ४ ६ ८ यदीतिपापकर्म्मणः प्रयोगो अनेनेदं कुकर्मकृतमितिशब्दोच्चारणं कृते सति

युधिष्ठिर उ· विद्वान्मूर्खप्रगल्भेन मृदुतीक्ष्णेन भारत आक्रुश्यमानः सदसि कथं कुर्यादरिंदम १
भीष्म उवाच श्रूयतां पृथिवीपाल यथैषोऽर्थोऽनुगीयते सदा सुचेताः सहते नरस्येहाल्पमेधसः २
अरुष्यन्क्रुश्यमानस्य सुकृतं नाम विंदति दुष्कृतं चात्मनो मर्षी रुष्यत्येवापमार्ष्टि वै ३ टिट्टिभं तमु
पेक्षेत वाशमानमिवातुरं लोकविद्वेषमापन्नो निष्फलं प्रतिपद्यते ४ इति संश्लाघते नित्यं तेन पापे
न कर्मणा इदमुक्तो मया कश्चित्संमतो जनसंसदि ५ स तत्र व्रीडितः शुष्को मृतकल्पो वतिष्ठते
श्लाघन्श्लाघनीयेन कर्मणा निरपत्रपः ६ उपेक्षितव्यो यत्नेन तादृशः पुरुषाधमः यद्यद्ब्रूयादल्प
मतिस्तत्तदस्य सहेद्बुधः ७ प्राकृतो हि प्रशंसन्वा निंदन्वा किं करिष्यति वने काक इवाबुद्धिर्वाशमानो निरर्थ
कं यदि वाग्भिः प्रयोगः स्यात्प्रयोगे पापकर्मणः वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ९

वाग्भिर्वाङ्मात्रेण प्रयोगः परत्र दोषसिद्धिः स्यात्तर्हि वागेवार्थः प्रयोजनं स्यात् तव पुत्रो म्रियतामिति शब्देनैव पुत्रमृत्युः स्यात्
जिघांसतस्तु अर्थो व्यापारो न हि स्यात् यथा वाचा हतो न हन्यते एवं च वाचा दूषितो न दु
ष्यतीत्यर्थः ९ ॥

निषेकमिति स पवं वदन्नहन्नेन क्रियया चेष्टया वा वागादिव्यापारेण च लिंगेन निषेकं स्वमातरि रेतः सेकं पितरन्येन कृतमिति। आचष्टेमन्तं कथयति कौपीनं गुह्यप्रदेशं संदर्शयन्निव नृत्यं कुर्वन्मयूरो यथा आह्यते समपकृन्त्यामीति मन्यते न तु मम गुरुं क्लो काः पश्यंतीति त्रपते एवं खलो पि मया सममहानमुकस्य भार्यां कृतं मुक्तं इति आचष्टे न तु अनेन मम मातुर्दोषः स्पष्टीक्रियते

निषेकं विपरीतं स आचष्टे वृत्तचेष्टया मयूर इव कौपीनं नृत्यं संदर्शयन्निव ९ यस्यावाच्यं न लोके स्ति नाकार्यं चापि किंचन वाचं तेन न संदध्यात्क्षुचिः संक्लिष्टकर्मणा ११ प्रत्यक्षं गुणवादीयः परो क्षे चापि निंदकः स मानवः श्ववल्लोके नष्टलोकपरावरः १२ तादृग्जनशतस्यापि यद्ददाति च यद्धोति च परोक्षेणापवादी यस्तन्नाशयति तत्क्षणात् १३ तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसं वर्जयेत् साधुभिर्वर्ज्यं सारमेयामिषं यथा १४ परिवादं ब्रुवाणो हि दुरात्मा वै महाजने प्रकाशयति दोषान्स्वान् सर्पः फणमिवोच्छ्रितं १५ तं स्वकर्माणि कुर्वाणं प्रतिकर्तुं य इच्छति भस्मकूट इवाबुद्धिः खरो रजसि मज्जति १६ मनुष्यशालावृकमप्रशान्तं जनापवादे सततं निविष्टं मातंगमुन्मत्तमिवोन्नदन्तं त्य जेत तं श्वानमिवातिरौद्रं १७

मयैवेति न त्रपते इत्यर्थः ९ १० नष्टो लोकः परं ज्ञानं अवरो यशः म् स्थ यस्य सः नष्टलोकपरावरः १२ नादृकृसमान् १३ सारमेयामिषं श्वनो मांसं १४ निषेकमित्युक्त्वा आचष्टे परिवादमिति दोषान्जारजत्वादीन् भस्मकूटे भस्मराशौ खर इवाबुद्धिः रजसि कुः खि निमज्जति १६ शालावृकं श्वानमेव मनुष्यत्वेन लोके गृहीतमित्यर्थः १७ ॥

श्री॰
शां॰ रा॰
टी॰
२५

१८ प्रत्युच्यमानः आक्षिप्यमाणः परैरसद्भिः निशाम्य अभिभूयः अस्मि प्रत्युत्तरं मा देहीति निवारणीयः तदेवाह माभूरिति १९ द
शार्द्दैन संहतांगुलिपंचकेन पाणिना २० समवेक्ष्य पितेव रूढे सिद्धमेव २० २१ चतुश्शशततमः १४ पितामह १ अयं निंदारूपः २

अधीरं न्वेषं पथि वर्तमानं दमादपेतं विनयाच्च पापं अरिश्रियं नित्यमभूतिकामं धियाग्रस्तं तपापमतिं मनुष्यं १८ प्रत्युच्यमानस्त्वभिभूय यः परैर्निशाम्य माभूस्त्वमथार्त्तरूपः उच्चस्य नीचेन हि संप्रयोगं विगर्हयंति स्थिरबुद्धयो ये १९ क्रुद्धो दशार्द्दैन हि ताडयेद्वा स पांसुभिर्वा विकिरेत्तुषैर्वा विवृत्य दंतांश्च विभीषयेद्वा सिद्धं हि मूढे कुपिते नृशंसे २० विगर्हणां परमदुरात्मना कृतां सहेत यः संसदि दुर्जनान्नरः पठेदिदं वापि निदर्शनं सदा न वाङ्मयं स लभति किंचिदप्रियं २१ इति शांतौ राजधर्मे टिटिभकं नाम १४
युधिष्ठिरः पितामह महाप्राज्ञ संशयो मे महानयं संछेत्तव्यस्त्वया राजन् भवान्कुलकरो हि नः १ पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनां कथितो वाक्यसंचारस्ततो विज्ञापयामि ते २ यद्धितं राज्यतंत्रस्य कुलस्य च सुखोदयं आयत्यां च तदात्वे च तेमवृद्धिकरं च यत् ३ पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत् अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ४ अभिषिक्तो हि यो राजा राष्ट्रस्थो मित्रसंवृतः

४ [illegible] ५

हितं अनिंद्यं आयत्यां उत्तरकाले ३ ४ मित्रसुहृदौ प्रत्युपकारमपेक्षानपेक्ष्य चोपकर्त्तारौ तद्वान्समुपेतः शौर्यादिनेति शेषः ५

२५

तथापि जितेन्द्रियत्वात् विगुणोत भृत्यस्य न राज्ये सर्वं लभेतेन वेति प्रश्नार्थः सत्यपि साधनान्तरे भृत्यानामात्म्हत्याभावे राज्यो-
न श्यतित त्सद्भावे च सर्वान्कामान् फलतीत्यनन्तं चाह योहीत्यादिना असत्यग्रहवृत्तिः इंद्रियाणामनिग्रहशीलः भृत्यफलैः भृत्य-

श्रीबृः ६

योऽसत्यग्रहवृत्तिः स्नेहरागबलात्मनः इंद्रियाणामनीशत्वादसज्जनबन्धुषकः ६ तस्य भृ-
त्या विगुणतां यान्ति सर्वे कुलोद्गताः न च भृत्यफलैरर्थैः स राजा संप्रयुज्यते ७ एतन्मे संशयस्था-
स्य राजधर्मान्बृहद्विदान् बृहस्पतिसमो बुद्ध्या भवान् शंसितुमर्हति ८ शंसिता पुरुषव्याघ्र त्वन्नः
कुलहितेरत त्वत्तश्चैको महाप्राज्ञो यो नः शंसति सर्वदा ८ त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितो-
दयं अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सदा ९ कीदृशाः सन्निकृष्टास्युः भृत्याः सर्वगुणान्वि-
ताः कीदृशैः किं कुलीनैर्वा सह यात्रा विधीयते १० नह्येको भृत्यरहितो राजा भवति रक्षिता राज्यं चे-
दं जनः सर्वस्तत्कुलीनोऽभिकांक्षति ११ भीष्म उ॰ न च प्रशास्तुं राज्यं हि शक्यमेकेन भारत असहाय-
वता तात नैवार्थाः केचिदप्युत १२ लब्धुं लब्ध्वापि सततं हि तं भरतर्षभ यस्य भृत्यजनः सर्वो ज्ञान-
विज्ञानकोविदः १३ हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते १४ मन्त्रिणो यस्य कुलजा असंहार्याः स-

बलप्राप्यैः अर्थैः धनादिभिः ६ ७ तत्ताविद्वरः ८ १२ लब्धुं लब्ध्वा अरक्षितुं शक्या इति १३ १४ असंहार्याः उत्कोचादिना अभेद्याः १५

श्री· शां·रा· टी· २१६

१६ १८ पटलंसमूहं १९ कोष्टागारंधान्यादिसामग्रीगृहं गुणीभवेत्बहुगुणीभावंगच्छेत् २० व्यवहारःअर्थिप्रत्यर्थिनोर्वि
वादेनिर्णयः फलोदयःअर्थिन्यनृतेअर्थ्यमानेद्विगुणोदंडोराज्ञायाह्यः प्रत्यर्थिन्यनृतेयावदर्थ्यमानंअर्थिनेदाप्यंतावानेव
राजदंडश्चफलपर्यंतः तत्रदृष्टांतः शंखलिखितइति यथाफलमात्रेस्तेयेशंखेनलिखितस्यहस्तच्छेदोराज्ञानप्रतिषिध्यपि

अनागतविधातारःकालज्ञानविशारदाः अतिक्रांतमशोचंतःसराज्यफलमश्नुते १६ सम
डुःखसुखायस्यसहायाःप्रियकारिणः अर्थचिंतापराःसत्याःसराज्यफलमश्नुते १७ यस्यना
तीजनपदःसन्निकर्षगतःसदा अक्षुद्रःसत्पथालंबीसराजाराज्यभाग्भवेत् १८ कोशाख्यपट
लंयस्यकोशवृद्धिकरैर्नरैः आप्तैस्तुष्टैश्चसततंचीयतेसनृपोत्तमः १९ कोष्टागारमसहार्यै
राप्तैःसंचयतत्परैः पात्रभूतैरलुब्धैश्चपाल्यमानंगुणीभवेत् २० व्यवहारश्चनगरेयस्यकर्मा
फलोदयः दृश्यतेशंखलिखितःसधर्मफलभाङ्नृपः २१ संगृहीतमनुष्यश्चयोराजाराजधर्म
वित् षड्वर्गप्रतिसंहर्तासधर्मफलमश्नुते २२ इतिशांतिपर्वणिराजधर्मे ११५ भीष्मउ·
अत्राप्युदाहरंतीममितिहासंपुरातनं निदर्शनंपरंलो

त्वाकारितस्तद्वदित्यर्थः २१ षड्वर्गंसंधिविग्रहादिकं २२
पंचदशाधिकशततमः ११५ अत्रवत्समाप्तोऽयंउत्तमाधममध्यमस्थानेषुक्रमादुत्तमाधममध्यमाप्रवयोज्याः तत्तउच्चस्थानेनीचोनियोज्यइत्य

मिनकोविनयोश्चाक्रांतमशोचंतइतितत्समाससमहारेति २१६

अस्यैववक्ष्यमाणस्य २ ४ सत्त्वाः प्राणिनः ५ ६ सुखविश्रब्धदाः सुखाविनः स्युः इति विश्रब्धस्योत्तरं सुखाविनः स्युः इति तत्प्रदाः इत्यर्थः न्य

अस्यैवार्थस्य संदर्शाय कृतं मे तपोवने जामदग्न्यस्य रामस्य यत्कृतं महर्षिसत्तमैः २ वने महति कस्मिं
श्चिद् मनुष्यनिषेविते ऋषिर्मूलफलाहारो नियतो नियतेंद्रियः ३ दीक्षादमपरः शांतः स्वाध्या
यपरमः शुचिः उपवासविशुद्धात्मा सततं सत्त्वमास्थितः ४ तस्य संदर्शसद्भावमुपविष्टस्य धीम
तः सर्वे सत्त्वाः समीपस्था भवंति वनचारिणः ५ सिंहव्याघ्रगणाः क्रूरा मत्ताश्चैव महागजाः द्वी
पिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ६ ते सुखप्रश्नदाः सर्वे भवंति क्षतजाशनाः तस्यर्षेः
शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ७ दत्त्वा च ते सुखप्रश्नं सर्वे यांति यथागतं ग्राम्यस्त्वेकः पा
शुस्तत्र नाजहाच्च महामुनिं ८ भक्तोनुरक्तः सततमुपवासकृशो बलः फलमूलोदकाहारः
शांतः शिष्टाः कृतिर्यथा ९ तस्यर्षेरुपविष्टस्य पादमूले महामते मनुष्यवद्गतो भावः स्नेहबद्धोभ
वद्दृशं १० ततोभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः स्वार्थमत्यंतसंतुष्टः क्रूरः काल इवांत
कः ११ लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः व्यादितास्यः क्षुधाभग्नः प्रार्थयानस्तदा
मिष १२ दृष्ट्वा तं क्रूरमायांतं जीवितार्थी नराधिप प्रोवाच श्वा मुनिं तत्र तच्छृणुष्व विशांपते १३

ग्भूताः दासभूता ७ ८ ९ भावं चित्तं १० द्वीपी व्याघ्रः ११ १२ १३ ॥

श्री॰
शा॰ रा॰
टी॰
२७

१४ १५ द्वीपिनः द्वीपिरूपात् स्वस्वतः रूपरहितः स्वरूपहीनः १६ १९ त्वयाभुक्तमपीडितं २० घोरशशानत्तमः ११६ व्याघ्रस्यमृगैरहन्नः १

मम शत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने १४ तथा कुरु म
हाबाहो सर्वथा त्यक्तसंशयः स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणं रूपान्तरः सर्वसत्वानां तमैश्वर्य
समन्वितः १५ मुनिः कृत्वाथ न भयं द्वीपिनः कार्यमस्त्विति कथ्यचन एष त्वद्रूपरहितो द्वीपी भवसि
पुत्रकः १६ ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः चित्राङ्गो विस्फारदंष्ट्रो वने वसति निर्भयः १७
तं दृष्ट्वा सम्मुखे द्वीपी आत्मनः सदृशं पशुं अविरुद्धस्ततस्तस्य तत्क्षणात्समपद्यत १८ ततोऽभ्ययात्महा
रौद्रो व्यादितास्यः क्षुधान्वितः द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः १९ व्याघ्रं दृष्ट्वा क्षुधावि
ष्टं दंष्ट्रिणं वनगोचरं द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् २० संवासजं परं स्नेहमृषिणा कुर्वता
तदा स द्वीपी व्याघ्रतां नीतो रिपूणां बलवत्तरः २१ ततो दृष्ट्वा स शार्दूलो नाहनत्तं विशाम्पते स तु श्वा
व्याघ्रतां प्राप्य बलवान्पिशिताशनः न मूलफलभोगेषु स्पृहामप्यकरोत्तदा २३ यथा मृगपति
र्नित्यं प्रकांक्षति वनौकसः तथैव स महाराज व्याघ्रः समभवत्तदा २४ इति शांतौ राजधर्मे श्वर्षिसं
वादे ११६ भीष्मउ॰ व्याघ्रो टजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः गजश्चागात्तमुद्देशं मत्तो मेघ इवोत्थि

२७

२ ३ ४ कमलखण्डानिकमलसमूहान् ५ निशानिशं बहुरात्रं ६ ७ ८ समन्वयात्संबंधात् ९ १० ११ १२ १४ १५ ॥

प्रभिन्नकरटः प्रांशुः पद्मीवितन्तकुंभकः स विषाणोमहाकायो मेघगंभीरनिस्वनः २ तं दृष्ट्वा
कुंजरं मत्तमायान्तं बलगर्वितं व्याघ्रोहस्तिभयात्त्रस्तस्तं भूमिं विशारणाययौ ३ ततो नयं कुंजरं तं
व्याघ्रं तं भूमिसत्तमः महामेघनिभं दृष्ट्वा समभीतो ऽभवत्कुञ्जः ४ ततः कमलखण्डानि शल्लकीगहना
नि च भक्षयन्सुदायुक्तः पद्मरेणुविभूषितः ५ कदाचिद्भ्रममाणोऽस्य हस्तिनः संश्रवं तदा श्रुत्व
रण्यात्तत्रस्यसकालेगच्छन्निशानिशं ६ अथाजगाम तं देशं केसरी केसराहणाः गिरिकंदर
जो भीमः सिंहो नागकुलान्तकः ७ तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयार्दितः शरविशारणामा
पेदे वेपमानो भयातुरः ८ स ततः सिंहनादेनैनोनादो ह्रीश्रुतिनानातदा वनं नागगणाय सिंहत्त्वं जा
निसमन्वयात् ९ दृष्ट्वा च सोऽभवत्सिंहो वन्यो भयसमन्वितः स चाश्रमेवमत्सिंहस्तस्मिन्नेव महावने
१० तद्भयात्पशवो नान्येतपोवनसमीपतः व्यहरस्तत तदा त्रस्ता जीविताकांक्षिणस्तथा ११ कदावि
त्कालयोगेन सर्वप्राणिविहिंसकः बलवान्ततजाहारो नानामत्त्वभयंकरः १२ अष्टपादुर्द्धनय
नः शरभो वनगोचरः तं सिंहत्वमागच्छन्मुनेस्तस्य निवेशनं १३ तं मुनिः शरभं चक्रे वलोकेमा
विदम ततः स शरभो वन्यो मुनेः शरभमग्रतः १४

१५ १८ अकृतस्तस्य देहतः स्वयोनिज इति १९ २० मदयुक्तः प्रवृद्धमदः २१ विरूपो विविधेन रूपेणात्यन्तरूपः नतज्ञं कुलान्वयः तेन

दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्वनात् स एवं शरभस्थाने न्यस्तो मुनिना तदा १५ मुनेः पार्श्वग
तो नित्यं शरभः सुखमास्तवान् ततः शरभसंत्रस्ताः सर्वे मृगगणास्तदा दिशः संप्राद्रवन् राज
न् भयाज्जीवितकांक्षिणः शरभोप्यतिसंहृष्टो नित्यं प्राणिवधे रतः ७ फलमूलाशनं कर्तुं नै
च्छत्स पिशिताशनः ततो रुधिरतर्षेण बलिना शरभोन्वितः ८ इयेष तं मुनिं हन्तुमकृतज्ञः स्व
योनिजः ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ९ विज्ञाय स महाप्राज्ञो मुनिः श्वानं तमु
क्तवान् श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः २० व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमा
गतः सिंहः सन् बलमापन्नो भूयः शरभतां गतः २१ मया स्नेहपरीतेन विसृष्टो न कुलान्वयः
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि २२ तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि
ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः २३ ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्तवान्
२४ इति श्रीमहाभारते शान्तिपर्वणि राजधर्मे श्वर्षिसंवादः १७ भीष्म उ॰ स्वां प्रकृतिमापन्नः प
रं दैन्यमुपागतः ऋषिणा हुंकृतः पापस्तपोवनबहिः कृतः १ ॥

तेन कुलेन अन्वयः संबंधो यस्य स कुलान्वयः यस्मादेशात्त्वमवसि २२ २४ सप्तदशशततमः १७ सम्पा १ ॥

दृष्टांतमुपपाद्यदार्ष्टांतिकमाहैवमित्यादिना २ ४ राजाअनागसिभिद्यमानोपिकुलीनःपापेबुद्धिंनकरोतीत्यन्वयः ५
अकुलीनस्तुनिंदामात्रेणशत्रुतांव्रजेत् ६ ७ स्वामिनोमित्राणांचभूषकंऐश्वर्यलिप्सुं ८ सत्वसंग्रहणेप्राणिनामात्रंज

एवंराज्ञामतिमताविदित्वासत्यशौचवतां आर्जवंप्रकृतिंसत्वंश्रुतंवृत्तंकुलंदमं २ अनुक्रोशं
बलंवीर्यंप्रभावंप्रश्रयंदमं भृत्यायेयत्रयोग्याःस्युस्तत्रस्थाप्याःस्वरक्षिताः ३ नापरीक्ष्यमही
पालःसचिवंकर्तुमर्हति अकुलीननराकीर्णोनराजासुखमेधते ४ कुलजःप्रकृतोराजासुकु
लीनतयासदा नपापेकुरुतेबुद्धिंभिद्यमानोप्यनागसि ५ अकुलीनस्तुपुरुषःप्राकृतःसाधुसं
श्रयात् दुर्लभैश्वर्यतांप्राप्तोनिंदितःशत्रुतांव्रजेत् ६ कुलीनंशिक्षितंप्राज्ञंज्ञानविज्ञानपारगं स
र्वशास्त्रार्थतत्वज्ञंसहिष्णुंदेशजंतथा ७ कृतज्ञंबलवंतंचक्षांतंदांतंजितेंद्रियं अलुब्धंलब्धसंतुष्टं
स्वामिमित्रबुभूषकं ८ सचिवंदेशकालज्ञंसत्वसंग्रहणेरतं सततंयुक्तमनसंहितैषिणमतंद्रितं
९ युक्ताचारंस्वविषयेसंधिविग्रहकोविदं राज्ञस्त्रिवर्गवेत्तारंपौरजानपदप्रियं १० खातकव्यूहतत्व
ज्ञंबलहर्षणकोविदं इंगिताकारतत्वज्ञंयात्राज्ञानविशारदं ११ हस्तिशिक्षासुतत्वज्ञमहंकारविवर्जि=
तं प्रगल्भंदक्षिणंदांतंबलिनंयुक्तकारिणं

ने ९ १० खातकाःपरसैन्यावरोधकाःयेव्यूहादयस्तेषांतत्वज्ञं ११ १२ ॥

श्री॰
शां॰रा॰
टी॰
२१५

चोतं शुद्धं १३ प्रसन्नं सत्मार्ग्गगामिनं १४ १५ १६ मेधावित्वमो १७ विपर्यये प्रत्यमावृत्ति अपकारिणि क्षमावान् १८ दानस्य अ
च्छेदे अनवच्छेदे विषये स्वयं अविच्छेदकर्त्ता १९ नातिर्द्वन्द्वोऽनिश्चितिग्रहः कर्त्ताऽपकर्त्ता २० २१ गुणशतऽलीनत्वादयपकार्य

चोतं चोतजनाकीर्ण्णं सुखं स्वभावदर्शनं नायकं नीतिकुशलं गुणैश्च समन्वितं ४ प्रसन्नं प्रश्रि
तं सत्यं नामस्य वादितमेव च धीरं शूरं महार्हं च देशकालोपपादकं ५ सविवेकः प्रकृतेतेनैव नमवम
न्यते तस्य विस्तीर्यते राज्यं ज्योत्स्नायां ग्रहपतेरिव १५ यत्तैरेव गुणैर्युक्तो राजा शास्त्रविशारदः पदेव्याय
मे परमः प्रजापालनतत्परः १६ धीरो मेधी शुचिस्तीव्राः कालेशु क्षकालवित् शुश्रूषुः श्रुतवान् श्रो
ताऽहापोहविशारदः १७ मेधावी धारणायुक्तो यथान्यायोपपादकः दान्तः सदा प्रियाभाषी क्षमावा
ञ्च विपर्यये १८ दानाच्छेदे स्वयंकारी श्रद्धालुः सुखदर्शनः आर्त्तहस्तप्रदो नित्यमाप्तो हितरतः
१९ नाहंवादी निर्द्वन्द्वो न यत्किंचनकारकः कृते कर्म्मण्यमात्यानां कर्त्ता भक्तजनप्रियः २० संगृहीतजना
नोऽस्तब्धः प्रसन्नवदनः सदा सदा भृत्यजनापेक्षो न क्रोधी सुमहामनाः २१ युक्तदण्डो न निर्द्दण्डो धर्म्मकार्या
नुशासनः चारनेत्रः प्रजावेक्षी धर्म्मार्थकुशलः सदा २२ राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् यो
याश्चैवमनुष्ठेयः सर्वे गुणगणोर्ष्टिताः २३ ॥

चाशदमात्यगुणास्तत्सहितः धर्म्मपरमत्वादयपक्वचत्वारिंशदे
वं अष्टोत्तरं गुणशतं एतेषां सन्धिविग्रहकोविदमित्यादिरीत्याऽन्यत्र गुणाष्टकं ऊहयित्वा पूर्णं शतं ज्ञेयं २३ ॥

२४ २५ २८ अष्टदशशततमः ११८ एवं १ नीचान्नीचैनैवयोजयेत् १ विपरीतेदोषमाहनश्येति स्वस्थानंप्रमाणंचोत्क्रम्य

अन्वेष्टव्याः सुपुरुषाः सहायाराज्यधारणे नविमानयितव्यास्तेराज्ञावृद्धिमभीप्सता २४ यो
धाः समरशौंडीराः कृतज्ञाः शास्त्रकोविदाः धर्मशास्त्रसमायुक्ताः पदातिजनसंवृताः २५ अभ
यागजपृष्ठस्थारथचर्याविशारदाः इष्वस्त्रकुशलायस्यतस्येयंनृपतेर्मही २६ सर्वसंग्रहणेयु
क्तोनृपोभवतियःसदा उत्थानशीलोमित्राढ्यःसराजाराजसत्तमः २७ शक्याचाश्वसहस्रेण
वीरारोहेणभारत संगृहीतमनुष्येणकृत्स्नाजेतुंवसुंधरा २८ इतिश्रीमहाभारतेशांतिपर्व
णिराजधर्मेश्वर्षिसंवादः ११८ भीष्मउ॰ एवंशुनासमानभृत्यान्स्वेस्वेस्थानेनराधिपः नियोज
यतिकृत्येषुसराज्यफलमश्नुते १ नश्वास्वस्थानमुत्क्रम्यप्रमाणमभिसत्कृतः आरोप्यःश्वा
स्वकात्स्थानादुत्क्रम्यान्यत्प्रमाद्यति २ स्वजातिगुणसंपन्नाः स्वेषुकर्मसुसंस्थिताः प्रकर्तव्या
ह्यमात्यास्तुनास्थानेप्रक्रियात्क्षमा ३ अनुरूपाणिकर्माणिभृत्येभ्योयः प्रयच्छति सभृत्य
गुणसंपन्नोराजाफलमुपाश्नुते ४ शरभःशरभस्थानेसिंहःसिंहइवोर्जितः व्याघ्रोव्याघ्र
इवस्थाप्योद्वीपीद्वीपीयथातथा ५ कर्मस्विहानुरूपेषुन्यस्याभृत्यायथाविधि प्रतिलोमंनभृ

उच्चस्थानेचआरोप्यःआरोपितश्चप्रमाद्यतीतियोजना अबुद्धिरितिच्छेदः ६ ॥

३ ८ ९ वहिश्चराः प्राणाइवेतिशेषः १० ११ १२ १३ १४ विरक्ताः अपरावर्त्तिनः १५ १६ १७ १८ १९ ॥

यः प्रमाणमतिक्रम्य शक्तितो मन्त्रपाथिपः भृत्यान्स्थापयते बुद्धिर्न्न स रंजयते प्रजाः ७ न बालि

शान्न वृद्धान्नाशास्त्रान्नाजितेन्द्रियाः नाकुलीनान्नराः सर्वे स्थाप्यास्तु गुणगौरविणा ८ मायवः कु =

लजाः शूराज्ञानवन्तोनसूयकाः अलुब्धाः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ९ न्यग्भूतास्तस्य ७

गः शान्ताश्चौत्ताः प्रकृतिजैः शुभाः स्वस्थानान्नपकृष्यायेते स्युराज्ञो बहिश्चराः १० सिंहस्य सततं

पार्श्वे सिंह एवानुगो भवेत् असिंहः सिंहसहितः सिंहवल्लभते फलं ११ यस्तु सिंहः श्वभिः कीर्णः

सिंहकर्मफले रतः न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः १२ एवमेतैर्मनुष्येन्द्र शूरैः प्रा

ज्ञैर्बहुश्रुतैः कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुन्धरां १३ नाविद्यो नानृजुः पार्श्वे नाप्राज्ञो ना

महाधनः संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर १४ बाणवद्विसृता यान्ति स्वामिकार्यपरा

नराः ये भृत्याः पार्थिवहिता स्तेषां सान्त्वं प्रयोजयेत् १५ कोशश्च सततं रक्ष्यो यत्नमास्थाय राज

भिः कोशमूला हि राजानः कोशो वृद्धिकरो भवेत् १६ कोष्ठागारं च ते नित्यं स्फीतैर्धान्यैः सुसंवृ

तं सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव १७ नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः वाजि॰

१९ २० नवदशशततमः ११९ राजवृत्तानीत्यध्यायः पूर्वोक्तानां राजधर्माणां सर्वेषामुपसंहारार्थः १ राजधर्माणां राजधर्मविदां
मतं यत् विस्तरेणोक्तं तदेव प्रणेयं प्रकर्षेणानेतव्वोढुं शक्यं संक्षिप्तमित्यर्थः प्रब्रूहि २ सर्वभूतरक्षणोक्तकृत्स्नो राजधर्मः परिसमा
प्त इत्याह रक्षणमिति ३ एतदेव मयूरदृष्टान्तेनोपपादयति यथेति बर्हाणि पत्राणि भुजगाशनो मयूरः ४ तैक्ष्ण्यं क्रूरत्वं

त्तानि त्वं युजनावेदी मित्रमेव बधिसंस्तुतः पौरकार्यहितान्वेषी भव कौरवनंदन १९ एषा ते नैष्ठिकी
बुद्धिः प्रज्ञा चाभिहिता मया श्रुत्वा निदर्शनं तात किं भूयः श्रोतुमिच्छसि २० इति शांतिपर्वणि राज
धर्मे ऋषिसंवादः ११९ युधिष्ठिर उ० राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत पूर्वैः पूर्वनियुक्तानि रा
जधर्मार्थवेदिभिः १ तदेव विस्तरेणोक्तं पूर्वदृष्टं सतां मतं प्रणेयं राजधर्माणां प्रब्रूहि भरतर्ष
भ २ भीष्म उ० रक्षणं सर्वभूतानामिति क्षात्रे परं मतं तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ३ य
था बर्हाणि बिभर्ति भुजगाशनः तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ४ तैक्ष्ण्यं जिह्मत्वमादांत्यं
सत्यमार्जवमेव च मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ५ यस्मिन्नर्थे हितं यत्स्यात्तद्वर्णं रू
पमाविशेत् बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ६ नित्यं रक्षितमंत्रः स्याद्यथा मूकः शर

जिह्मत्वं कौटिल्यं आदाल्भ्यं दल्भो भयं तदभावोऽदल्भः अभयं न च्छिखी श्लक्ष्णाक्षरतनुः श्रीमान्भवेच्छास्त्रविशारदः
स्य भावश्चादल्भ्यं अभयप्रदत्वमित्यर्थः रलयोः सावर्ण्यात् दभी भये धातुस्तस्य रूपं पाठांतरे त्वल्पस्यापि अर्थः ५ यस्मिन् दंडे अनुग्रहे वा हितं कु

श्री· शां·रा· टी· २२१

आपद्द्वारेषुमंत्रभेदादिषुयुक्तोवहितःस्यात् शैलवर्षोदकानिपर्वतप्रदेशेषुहृष्टाजनितानिमहानदीजलानि शिखांयोगपलिं
गंकुर्त्वादिकंप्रकाशयेत् ८ नित्यमिति आचरेत्यथायोगंदंडं नत्रदृष्टान्तःहृहृदिति हृदृतोहृताःयत्रतत्रहृदहृतंतालवृंत
आस्रवत् रसप्रस्रवद्यथारसग्राहीप्रदेशविशेषएवप्रयत्नरसंस्पृशत्तानितत्कालंतत्तच्छेदेनरस्तकांडादिवत्ततोरसंजिहृतिति

आपद्द्वारेषुयुक्तःस्याज्जलप्रस्रवणेष्विव शैलवर्षोदकानीवद्विजान्सिद्धान्समाश्रयेत् अर्थ
कामःशिखांराजाकुर्याद्धर्मध्वजोपमां नित्यमुद्यतदंडःस्यादाचरेदप्रमादतः लोकेचायव्य
यौदृष्ट्वाबृहद्वृक्षमिवास्रवत् ९ मृजावान्स्यात्स्वयूथ्येषुभौमानिचरणैःक्षिपेत् जातपक्षःपरि
स्पंदेत्प्रेक्षेद्वैकल्यमात्मनः १० दोषान्विवृणुयाच्छत्रोःपरपक्षान्विधूनयेत् काननेष्विवपुष्पा
णिबहिरर्थान्समाचरन् ११ उच्छ्रितान्नाशयेत्स्फीतान्नरेन्द्रानचलोपमान् श्रयेच्छायामवि
ज्ञातांगुप्तंरणमुपाश्रयेत् १२ प्रावृषीवासितग्रीवोमज्जेतनिशिनिर्जने मायूरेणगुणेनैवस्त्री
भिश्चालक्षितश्चरेत् १३ ॥

एवंप्रजानामायव्ययौज्ञात्वाताःजीवयन्ताभ्यःधनरसमादद्यादित्यर्थः ९ मृजाशुद्धिमत्त्वान्भौमानिपरेषांसस्यानि चरणैःश्रा
म्यादिग्रामनैःक्षिपेन्नाशयेत् १० अर्थान्स्वराज्यादिव्याजात्परराष्ट्रेसमाचरन्परपक्षान्विधूनयेत् ११ छायांपरदुर्गाधिपतिनासेयिंक्ष
त्वादिवतादर्शनादिव्याजेनाकस्मात्परदुर्गंगत्वाप्रविश्यतन्नाशयेदित्याह उच्छ्रितानिति १२ असितग्रीवोमयूरोनिशीवप्रावृषिमे

तत्रापि चारैर्दर्शितास्तु भूमिषु यात्रीसौविदल्लसूपकारादिषु परैर्भेदितेषु अभिगतान् विषादीन् पाशान् परिवर्जयेत् आत्मानं रक्षे
द्वेत्याह नेति ४ नन्वकृतस्तत्रापि पाशप्रसक्तिरित आह प्रणाययेदिति गहनेऽडवीये पाशस्तान् ने मतिं तां कपटभूमिं प्रतिपद्यात्मानं
प्रणायेत् प्रापयेत् तदानश्येदेव वाशब्दः पूर्वार्थे प्रयोजयन्ति हि राजानो विषमयीं कन्यां हत्वा वा दीपान्तरं प्राप्ते यं पद्मिनी अस्याः
स्पर्शमात्राद् दशीतिवार्षिको पि षोडशवर्षो भवतीति सेयमतिश्रेष्ठा तत्तयाश्रीमत्तामर्थे कल्पिता ऽनुग्राह्या चेयं वचेति श्रुत्वा
प्रणास्तत्र चारमुखात् कपटं ज्ञात्वा तां न प्रणायेत् ऊहितान् केन चिन्निमित्तेन तर्कितान् तान् प्रति विषान् कन्यादीन् स्पर्शमात्रेण
उच्छ्वासमात्रेण वा संगतमक्षिकामशकादिमरणालिंगेन ज्ञातान् हन्यादेव ५ नाशयेदिति सार्द्धः बलवद्गाणिस्थूलान् प

नृजस्याश्चैततुत्राणं रक्षेदात्मानमात्मना चारभूमिष्वभिगतान्पाशांश्च परिवर्जयेत् ४ प्रणाये
द्वापितां भूमिं प्रणाश्येद्गहनेषु नः हन्यात्कृष्टानति विषान्योनिसंगतयोहितान् ५ नाशयेद्ब
लवद्वाणिः सन्निवासान्निवासयेत् सदा वर्हिनिभः कामं प्रशस्तकृतमाचरेत् सर्वतश्चाददेत्सत्ता
पतंगगहनेष्विव ६ ॥

त्वान् सैन्यस्य पदस्थानीयान् महाशिविरवारवनितानटनर्तकादींश्च नाशयेत् मयूरश्च
दूरीकुर्यात् बलं गंयरसैद्धपैस्थ्यामनिस्थोल्पसैन्ययोरिति मेदिनी सन्निवासान् दृढमूलान् पक्षान् अमात्यादीन् सूरांश्च वासयेत्
वर्हिनिभः मयूरतुल्यः कामं यथेष्टप्रशस्तं कृतप्रशस्ताक्रियापक्षाणां विस्फारणं आचरेत् अनेनैव क्रमेण सर्वतश्च ज्ञातिमा
त्रात् सत्तां आददीत यथोक्तं बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेदित्यादि पतंगं शलभसमूहो यथा गहनेषु पतति गहनेव
तिष्ठत्येककरोति एवं संभूय शत्रुराष्ट्रे पतितव्यमित्यर्थः पन्नगगहनेष्विवेति पाठे पन्नगग्राही पन्नगमिवाकस्मात्कृष्टत्तीया।

१७ बुद्ध्याआत्मनः संयमनं इत्यमेव कर्त्तव्यं उक्तं नियमं कुर्यात् परबुद्ध्या च तत्रैवार्थसंवादितया तस्यार्थस्यावधारणो दृढनरोति। स्वयः कार्यः बुद्ध्या शास्त्रोत्थया धिया आत्मगुणस्य पूर्वोक्तनिश्चयहेतोः प्राप्तिर्भवति यत्तदेव शास्त्रस्य निदर्शनं यत्कार्यं तेनादर्तव्य ताबुद्धेरित्यर्थः १८ आत्मनः स्वस्य परिमर्षणा सर्वतोतीतानागतविचारेण बुद्धिकार्यनिश्चयं बुद्ध्या ऊहापोहकौशलरूपया

एवं मयूरवद्राजा स्वराज्यं परिपालयेत् आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः १७ आत्मसंयमनं बुद्ध्या परबुद्ध्यावधारणं बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनं १८ परं विश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् आत्मनः परिमर्षणा बुद्धिबुद्ध्या विचारयेत् १९ सान्त्वयोगमतिः प्राज्ञः कार्याकार्यप्रयोजकः निगूढबुद्धेर्धीरस्य वक्तव्ये वाक्कृतं तथा २० सनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः स्वभावमेष्यते तत्र कृष्णायसमिवोदके २१ अनुयुञ्जीत कृत्यानि सर्वाण्येव महीपतिः आगमैरुपदिष्टानि स्वस्य चैव परस्य च २२ मृदुशीलं तथा प्राज्ञं मूर्खं वार्थविधानवित् स्वकर्मणि नियुञ्जीत ये चान्ये च बलाधिकाः २३

मध्यया विचारयेत् साधकबाधकभूमौ संचारयेत् १९ तमेवाह सान्त्वेति वक्तव्ये उपदेशे कर्तव्ये कृतं अलं तस्योपदेशापेक्षा नास्तीत्यर्थः २० सः अनंतरश्लोकोक्तः प्राज्ञो बुद्ध्या बृहस्पतिसमोऽपि सन् यदि निकृष्टां कथां निर्बुद्धित्ववादं प्राप्नुयात् तर्हि स एव युक्तया स्वभावं स्वास्थ्यं प्रपद्यते उदके प्रतिष्ठितमायसं शोषमिव २१ २३

२४ ३१ गोभिः रश्मिभिः चरान् चारान् स्वनुचरान् समाचारान् ३२ अर्थं प्रस्तवयेत् अर्थं वर्तानं ज्ञापयेत् ३३ ३४ संचया

अथ दृष्टानि युक्तानि स्वानुरूपेषु कर्मसु सर्वांस्तानन्ववर्तेत स्वरांस्तन्त्रीरिवायता २४ धर्माणामवि
रोधेन सर्वेषां प्रियमाचरेत् ममायमिति राजा यः स पर्वत इवाचलः २५ व्यवसायं समाधाय सूर्यो
रश्मीनिवायतान् धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये २६ कुलप्रकृतिदेशानां धर्मज्ञान्मृ
दुभाषिणः मध्ये वयसि निर्दोषान् हिते युक्तान् विक्लवान् २७ अलुब्धान् शिक्षितान् दान्तान् धर्मे
षु परिनिष्ठितान् स्थापयेत्सर्वकार्येषु राजा धर्मार्थरक्षिणः २८ एतेन च प्रकारेण कृत्यानामाग
तिं गतिं युक्तः समवतिष्ठेत तल्लिप्सुश्चारैरुपलक्षितः २९ अमोघक्रोधहर्षश्च स्वयंकृत्यान्ववेक्षितः
आत्मप्रत्ययकोशश्च वसुदेव वसुंधरा ३० व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः गुप्तात्मा गुप्त
राष्ट्रश्च स राजा राजधर्मवित् ३१ नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवोदितः चरान्स्वनुचरान्विद्यात्तथा
बुद्ध्या स्वयं चरेत् ३२ कालप्राप्तमुपाददद्यान्नार्थं राजा प्रसूचयेत् अहन्यहनि संदुह्यान्महीं गामिव
बुद्धिमान् ३३ यथाक्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः तथा द्रव्यमुपादाय राजा कुर्वीत संचयं ३४
यद्धि गुप्तावशिष्टं स्यात्तद्वित्तं धर्मकामयोः संचयान्न विसर्गी स्याद्राजा शास्त्रविदात्मवान् ३५ ॥

न विसर्गी स्यात् कोषाद्धनं न दद्यात् अपि तु पर्याप्तमेवेत्यर्थः ३५ ॥

श्री॰
शां॰रा॰
टी॰
२२३

३६ आत्मा देहः देशे काले वा प्रमादः इत्येकं ३७ ३८ अबालः अहीनः अन्यः संपन्नः ३९ शत्रोः शत्रुं प्राप्य नैव हीयेत नैव प्रमादी
स्यात् ४० त्वयं पेश्वर्यं सर्वं पेश्वर्यादिकामः विजिगीषादिः तौ सर्वकामौ बुद्धा वा संदधीत संधिं वा कुर्यात् विग्रहादिकं कुर्यात् ४१

नार्थमल्पं परिभवेन्नावमन्येत शत्रुवान् बुद्ध्या तु बुध्येदात्मानं न चाबुद्धिषु विश्वसेत् ३६ धृतिर्दा
क्ष्यं संयमो बुद्धिरात्मा धैर्यं शौर्यं देशकालाप्रमादः अल्पस्य वा बहुनो वा विवृद्धौ धनस्यैतान्यष्टसमि
धनानि ३७ अग्निः स्तोको वर्द्धते ह्याज्यसिक्तो बीजं चैकं रोहसहस्रमेति आयव्ययौ विपुलौ संनिशाम्य
तस्मादल्पं नावमन्येत वित्तं ३८ बालोऽप्यबालः स्थविरो रिपुर्यः सदा प्रमत्तं पुरुषं निहन्यात् कालेना
न्यस्तस्य मूलं हरेत कालज्ञाता पार्थिवानां वरिष्ठः ३९ हरेत्कीर्तिं धर्ममस्योपरुन्ध्यादर्थे दीर्घं वीर्य
मस्योपरुन्ध्यात् रिपुर्द्वेष्टा दुर्बलो वा बली वा तस्माच्छत्रौ नैव हीयेद्यतात्मा ४० क्षयं वृद्धिं पालनं सं
चयं वा बुद्धा पृथौ संहतौ सर्वकामौ ततः स्वान्यं मतिमान्संदधीत तस्माद्राजा बुद्धिमन्तं श्रयेत ४१
बुद्धिर्दीप्ता बलवन्तं हिनस्ति बलं बुद्ध्या पाल्यते वर्द्धमानं शत्रुर्बुद्ध्या सीदते वर्द्धमानो बुद्धेः पश्चात्कर्म
यत्तत्प्रशस्तं ४२ सर्वान्कामान्कामयानो हि धीरः सत्त्वेनाल्पेनाप्नुते हीनदेहः यश्चात्मानं प्रार्थय
तेऽर्थ्यमानैः श्रेयः पात्रं पूरयेत च

वर्द्धमानं तीयमाणं बुद्धेः पश्चात् बुद्ध्यानुसारि ४२ अल्पेनापि सत्त्वेन बलेन अर्थ्यमा
नैर्युक्तं आत्मानं प्रार्थयते लब्धोदमश्च भवतीत्यर्थः श्रेयः पात्रं पूरयेत ततः श्रेयोऽपसर्पतीत्यर्थः ४३ ॥

॥ श्री हरि ॥

प्रगृहीतः स्त्रियः लक्ष्म्याः मूलं अर्थं सर्वशः सर्वाभ्यः संपीड्यमानः संपीडयन् प्रजाः हविद्युद्दत्तसंपातं समप्यकपतित्वापि
न ऊर्जितः स्यात् अत्रदृढदृढतरदृष्टान्तः प्रागेवोक्तः ४४ व्यवसायेन उद्योगेन विघातं लभेत ४५ अनुद्योगेन जन्मनन्नाशये
दित्याह यत्रेति ४६ कर्मयत्नादिर्गुणो अग्रं यस्य तत्फलं सर्वं तेन उपभोगे सर्वोपि लब्धः स चेदर्थैर्हीनस्तर्हि सर्वलोभाद्धर्म

तस्माद्राजा प्रगृहीतः प्रजाभ्यो मूलं लक्ष्म्याः सर्वशो ह्यादधीत दीर्घकालं ह्यपि संपीड्यमानो वि
द्युत्संपातमपि वा नोर्जितः स्यात् ४४ विघातं पोवा विपुलं यत्नवान् सर्वदा हि तेन व्यवसायेन शक्यं बु
द्धायत्तं तन्निवसेद्देहवान् हि तस्माद्विघाद्व्यवसायं प्रमृत ४५ यत्रासते मतिमन्तो मनस्विनः शक्रो वि
ष्णुर्यत्र सरस्वती च वसन्ति भूतानि च यत्र नित्यं तस्माद्विद्वान्नावमन्येत देहं ४६ लुब्धं हन्यात् सम्प्र
दानेन नित्यं लुब्धस्तृप्तिं परवित्तस्य नैति सर्वो लुब्धः कर्मगुणोपभोगे योऽर्थैर्हीनो धर्मकामौ ज
हाति ४७ धनं भोगान् पुत्रदारान् समृद्धं सर्वं लुब्धः प्रार्थयते परेषां लुब्धे दोषाः संभवन्तीह सर्वे त
स्माद्राजा न प्रगृह्णीत लुब्धं ४८ संदर्शनेन पुरुषं जघन्यमपि चोदयेत् आरभान्द्विषतां प्रा
न्तः सार्वार्थान्सम्प्रवर्तयेत् ४९ धर्मान्वितेषु विज्ञातामन्त्रीगुप्तमभ्युपादव आभिराजाकुलीनश्च =
पर्याप्तो राजसंग्रहे ॥

कामं द्रव्यादि विषयं च जहाति ४७ समृद्धिं च प्राप्यापीति शेषः धनं उत्कोचरूपं न प्रगृह्णी
त ४८ ४९ धर्मान्वितेषु ब्राह्मणमण्डलेषु विज्ञानानाज्ञानतत्त्वः राजसंग्रहे सामन्तवशीकरणे ५० ॥

निबोधबुध्यस्व मतिस्तत्पराक्रमस्तस्य विद्यमानत्वादिकुर्यात् ५२ विधानजं देवप्राप्तं राजधर्माज्ञानेप्राप्नोत्यर्थः सप्तदेवान
घ्यतीत्यर्थः ५३ गुणोपपन्नान् शौर्यादियुक्तान् गुणेषु संधिविग्रहादिषु आत्मवान् अप्रमत्तः यतः उत्थानेकुर्वाणान् शात्र
वान् अभिसंधाय लक्षीकृत्य निहंति ५३ दोषदर्शी निर्दोषपीतिशेषः ५४ सुहृत्स्वविज्ञायज्ञानपूर्वकं प्रीतेः प्रवृत्तोसत्यायो

विधिप्रयुक्तान्नरदेवधर्मानुक्तान्समासेन निबोध बुध्या इमान्विदध्याद्यतिसत्तस्य योवैराजामही
पालयितुं स शक्तः ५१ अनीतिजं यस्य विधानजं स्याद्देवप्राप्तं विधिवत्समदृश्यते न विद्यते
तस्य गतिर्महीपतेर्न विद्यते राज्यसुखं ह्यनुत्तमम् ५२ धनैर्विशिष्टान्मतिशीलपूजितान् गुणोप
पन्नान्युधिदृष्टविक्रमान् गुणेषु दृष्टानचिरादिवात्मवान्यतोभिसंधाय निहंति शात्रवान्
५३ पश्येदुपायान्विविधैः क्रियापथैर्न चानुपायेन मतिं निवेशयेत् श्रियं विशिष्टां विपुलं य
शोधनं न दोषदर्शी पुरुषः समश्नुते ५४ प्रीतिप्रवृत्तौ विनिवर्तिनो यथा सुहृत्सु विज्ञाय निवृ
त्तिचोभयोः यदेव मित्रं गुरुभारमावहेत्तदेव सुस्निग्धमुदाहरेद्बुधः ५५ एतान्मयोक्तांश्चर रा
जधर्मान्नृणां च गुप्तौ मतिमादधत्स्व अवाप्स्यसे पुण्यफलं सुखेन सर्वो हि लोको नृपधर्ममूलः ५६ इति श्रीम

सुहृदोमि हृत्स्वनितरां हत्वाप्यकस्मिन्कार्ये विनिवर्तिनो अभिमुखीकृत्य तेन योर्मध्ये यदेव गुरुभारमावहेत्तदेव उदाहरेत् प्रशंसेत् ५५ चरस्व अनु
तिष्ठ आदधत्स्व आधत्स्व दयया गोरक्षस्यस्वत्रूयं ५६ इति श्रीमहाभारते शांतिपर्वणि विंशतितमः ५८

अयंपितामहेनेत्यध्यायद्वयेनदंडस्वरूपादिकमुच्यते १ ८ कोदंडइत्याद्यएकादशप्रश्नाः तत्रकोदंडइत्यस्योत्तरमाहध
र्मेति धर्मस्यसंख्यासम्यक्ख्यानंदंडापरपर्यायव्यवहारशब्दवाच्यं व्यवहारपदंनिर्वक्ति तस्येतिसार्द्धेन अवहितात्म

युधिष्ठिरउ॰ अयंपितामहेनोक्तोराजधर्मःसनातनः ईश्वरश्चमहादंडोदंडेसर्वंप्रतिष्ठितं १ दे
वतानामृषीणांचपितॄणांचमहात्मनां यक्षरक्षःपिशाचानांसाध्यानांचविशेषतः २
सर्वेषांप्राणिनांलोकेतिर्यग्योनिनिवासिनां सर्वव्यापीमहातेजादंडःश्रेयानितिप्रभो ३ इ
त्येवमुक्तंभवतादंडेवैसचराचरं पश्यतालोकमासक्तंससुरासुरमानुषं ४ एतदिच्छाम्यहं
ज्ञातुंतत्वेनभरतर्षभ कोदंडःकीदृशोदंडःकिंपरायणः ५ किमात्मकःकथंमूर्त्तिःकथं
प्रभो जागर्तिचकथंदंडःप्रजास्ववहितात्मकः ६ कश्चपूर्वापरमिदंजागर्तिप्रतिपालयन्
कश्चविज्ञायतेपूर्वंकोवरोदंडसंज्ञितः किंसंस्थश्चभवेद्दंडःकावास्यगतिरुच्यते ७ भीष्मउ॰
शृणुकौरव्ययोदंडोव्यवहारोयथाचसः यस्मिन्हिसर्वमायत्तंसदंडइहकेवलः ८ धर्मसंख्योम
हाराजव्यवहारइतीष्यते तस्यलोपःकथंनस्याल्लोकेष्ववहितात्मनः ९ इत्येवंव्यवहारस्यव्यवहा
नोराज्ञः तस्यधर्मस्यलोपःकथंकेनप्रकारेणनस्यात्तत्प्रका रत्वमिष्यते अपिचैतत्पुराराजन्मनुनाप्रोक्तमा
रोव्यवहारःविगतःअवहारोनीचमार्गेणापरस्वादिहरणंयस्मात्सइतिव्युत्पत्यासिद्धः ९ अपिचेति एतत्एतस्यव्यवहारस्य

श्री॰
शां॰ रा॰
टी॰
२२५

प्रजारक्षकत्वाद्व्यवहारस्य धर्मपदवाच्यतोपपत्त्याह स्वप्रणीतेनेति १ यथेति स्वप्रणीतेनेति श्लोकेन यन्मनुवचनमुक्तं तद्ब्रह्मणः प्र
वचवचनं मनुसुत्वोनस्मृतमित्यर्थः २ श्रावितेति दंडएव उक्तवचनाद्धर्मशब्देन वाच्यत इत्यर्थः प्रागवचनं धर्मवचनं ३ रूपतोऽग्नि
रिवोत्थित इति तस्यांतरं रूपं दुष्टसंतापकत्वात् क्रूरमग्नितुल्यमित्युक्तं ४ बाह्यरूपं वर्णयति नीलेति दंष्ट्राधिष्ठात्र्याः देव
ताया ध्यानादिकं अज्ञानाद्दंडं दंडं जदोषतिरस्कर्तृ दंडकर्तृभिरमात्यादिभिर्ध्येयमित्येवमर्थमुक्तं यद्वित्वलौकिकानि दं

स्वप्रणीतेन दंडेन प्रियाप्रियसमात्मना प्रजा रक्षति यः सम्यक् धर्म एव स केवलः १ यथोक्तमेत
द्वचनं प्रागेव मनुना पुरा यन्मयोक्तं मनुष्येंद्र ब्रह्मणो वचनं महत् २ श्रावितं वचनं प्रोक्तमतः प्रा
ग्वचनं विदुः व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ३ दंडे त्रिवर्गः सततं सुप्रणीते प्रवर्तते
दैवं हि परमो दंडो रूपतोऽग्निरिवोत्थितः ४ नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः अष्टपा
न्नैकनयनः शंकुकर्णोर्द्ध्वरोमवान् ५ ॥

डधर्मव्यवहाराणामन्योन्यस्यैतेत्रर्हिपवंच्या श्रियं तत्र दंडः संहर्तृत्वा
द्वौद्रः कृष्णश्च नीललोहित इति तस्याग्निरिवोत्थित इति लोहितं रूपमुक्तं नीलं च नीलोत्पलेति निरुक्तं तत्र राज्ञो दंडो द्वेधा ह्नेन चला
भात्राणाय यस्य दंडस्य मालिन्यरागोत्पन्नत्वान्नीललोहितं दंडस्य रूपं च तस्य दंष्ट्राश्चत्वारः प्राणानां वधसाधनानि यत्रत्रसः तथाहि
केचिन्मानभंगेन केचिद्धनहरणेन केचिदंगवैकल्येन केचित्प्राणव्यापादनेन च वध्यंते ॥ तस्मा ॥

२२५

न्येवतद्दंष्ट्राः चत्वारो भुजाः अर्थादानकर्त्तारो यस्य सः तथाहि प्रजाभ्यः सामंतेभ्यश्च करादानं अनृतादर्थिनो ऽर्थमात्रद्रा
व्यात् द्विगुणधनादानं अनृतात्प्रत्यर्थिनस्तत्समं द्रव्यादानं धनवतः कदर्याद्विप्रान्त्सर्वस्वादानं चेति अथ तस्यैव व्याव
हाररूपिणो रूपं वर्णयति अष्टपान्नैकनयनः शंकुकर्णोर्ध्वरोमवान् जटी द्विजिह्व इति आवेदनं भाषा संप्रतिपत्तिर्मि
थ्योत्तरं कारणोत्तरं प्राङ्न्यायं प्रतिभूः क्रियाफलसिद्धिश्चेत्यष्टौ पादाः एतैर्हि निमित्तैर्दण्डश्चरति नान्यथेत्येतेषां पादत्वं तत्रा
वेदनं अर्थिना सभ्यान्प्रतिगत्वा देवदत्तो मदीयं शतं सुवर्णानां अमुकस्मिन्देशे काले साक्षिणा च गृहीत्वा न ददातीति तद्धस्ते
न लेखनं पुनरपि प्रत्यर्थिनमाहूय तत्समक्षं तथैव लेखनं भाषा तत्र प्रत्यर्थिना अहमेतस्य धारयामीत्युक्तेन कस्यापि दण्ड
इति तदिदं संप्रतिपत्तिरूपमुत्तरं न दण्डपादत्वेन गण्यते नाहमेतस्य धारयामीति मिथ्योत्तरं मया गृहीतमासीत् पुनः पराह
त्य दत्तमिति कारणोत्तरं अस्मिन्नर्थे ऽनेन पूर्वमहमभियुक्तस्तत्र पराजितो मयेति प्राङ्न्यायम् त्रिविधेष्वस्मिन्नुत्तरे अर्थि
भ्यां प्रतिभूर्देयः अहमेतस्मिन्पराजिते इदं द्रव्यं दास्यामीति क्रियास्वमतसाधकानां साक्षिपत्रभोगशपथादीनां प्रदर्श
नं ततो व्यवनेतस्य जय इति अष्टभ्यः पादेभ्यः अनंतरं अपराधी दण्ड्यत इत्येते दण्डस्य पादाः यदाह याज्ञवल्क्यः निह्नवे भावि
तो दद्याद्धनं राज्ञे च तत्समं मिथ्याभियोगी द्विगुणमभियोगाद्धनं दद्यादिति नैकनयनः नैकानि बहूनि नयनस्थानी
यानि राजामात्यपुरोहितपर्षद्राज्यानि दर्शनसाधनानि यस्मिन् शंकुकर्णः कीलाकर्णः अवश्यंश्रा
मः ऊर्ध्वरोमवान् अत्यंतमुत्फुल्लः शंकुकर्णश्चासौ ऊर्ध्वरोमवांश्चेति समासः ५ ॥

जटी अनेकसंदेहजटिलः द्विजिह्वः अर्थिप्रत्यर्थिनोर्वाक्यवैमत्यात् द्वेजिह्वयस्य सतथा एवं व्यवहाररूपिणो दंडस्य रूपा
ण्युक्त्वा धर्मात्मदंडरूपमाह ताम्रास्योम्रगराजतनुच्छद इति ताम्रो वह्निरेवाहवनीयादिरास्यं यस्य सतथा म्रगराजः कृ

जटी द्विजिह्वस्ताम्रास्यो म्रगराजतनुच्छदः एतद्रूपं बिभर्त्युग्रं दंडो नित्यं दुराधरः १६ असि
र्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शराः मुशलं परशुश्चक्रं पाशो दंडर्ष्टितोमराः १७ सर्वप्रहरणी
यानि संति यानीह कानिचित् दंड एव स सर्वात्मा लोके चरति मूर्त्तिमान् १८ भिंदन् छिंदन् रु
जन् कृंतन् दारयन् पाटयंस्तथा घातयन्नभिधावंश्च दंड एव चरत्युत १९ असिर्विशसनो धर्म
स्तीक्ष्णवर्मा दुराधरः श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः २० शास्त्रं ब्राह्मणमंत्रा
श्च शास्ता प्राग्वदतां वरः धर्मपालोक्षरो देवः सत्यगो नित्यगोग्रजः २१ असंगो रुद्रतनयो मनुर्ज्येष्ठः
शिवंकरः नामान्येतानि दंडस्य कीर्तितानि युधिष्ठिर २२ दंडो हि भगवान् विष्णुर्दंडो नारायणः
प्रभुः शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते २३ तथोक्ता ब्रह्मकन्येति लक्ष्मीर्वृत्तिः सरस्वती
दंडनीतिर्जगद्धात्री दंडो हि बहुविग्रहः २४ ॥

ष्णसाराः तत्संबंधि चर्म तनुच्छदं शरीराच्छादकं प्रावरणमस्य ५ दं
तेन दीक्षाप्रधानो यज्ञ उक्तः एतच्च सर्वं भोदानोपवासहोमादीनामुपलक्षणं १६ १९ २२ शुक्लदंडस्य रूपमाह दंडो हीति २३

किंपरायणश्चेत्यस्योत्तरं अर्थानर्थादिविवेकएवतस्यपरायणमित्याह अर्थानर्थावित्यादिना तस्माद्दंडःपरायणमित्यंतेन
अर्थानर्थौसुखंदुःखंधर्माधर्मौबलाबले दौर्भाग्यंभागधेयंचपुण्यापुण्येगुणागुणौ २५
कामाकामावृतुर्मासःशर्वरीदिवसःक्षणः अप्रमादःप्रमादश्चहर्षक्रोधौशमोदमः २६ दै
वंपुरुषकारश्चमोक्षामोक्षौभयाभये हिंसाहिंसेतपोयज्ञःसंयमोथविषाविषे २७ अंतश्चा
दिश्चमध्यंचकृत्यानांचप्रपंचनं मदःप्रमादोदर्पश्चदंभोधैर्यनयानयौ २८ अशक्तिःशा
क्तिरित्येवंमानस्तंभौव्ययाव्ययौ विनयश्चविसर्गश्चकालाकालौचभारत २९ अनृतंज्ञानि
तासत्यंश्रद्धाश्रद्धेतथैवच क्लीवताव्यवसायश्चलाभालाभौजयाजयौ तीक्ष्णतामृदुतामृत्यु
रागमानागमौतथा विरोधाश्चाविरोधश्चकार्याकार्येबलाबले ३० असूयाचानसूयाचधा
र्माधर्मौतथैवच अपत्रपानपत्रपेह्रीश्चसंपद्विपच्चदं ३१ तेजःकर्माणिपांडित्यंवाक्शक्ति
स्तत्वबुद्धिता एवंदंडस्यकौरव्यलोकेस्मिन्बहुरूपता नस्याद्यदीहदंडोवैप्रमथेयुःपरस्परं
भयाद्दंडस्यनान्योन्यंघ्नंतिचैवयुधिष्ठिर ३४ दंडेनरक्ष्यमाणाहिराजन्नहरहःप्रजाः राजानंव
र्धयंतीहतस्माद्दंडःपरायणं ३५ ॥

३४ ३५ ॥

किमात्मकः कथंभूतः कथंमूर्त्तिरितित्रिप्रश्नत्रयस्योत्तरमाह व्यवस्थापयतीति लोकपालनात्मकः सत्यपक्षपातीब्राह्म
णमूर्त्तिस्वरूप इत्यर्थः ३६ दण्डस्य ब्राह्मणमूर्त्तित्वे विहितावेत्कथं जागर्त्तीत्यस्योत्तरमाह धर्मयुक्ता इत्यादिना ब्राह्मणमूर्त्ति
र्दण्डोयत्नादिहावाऽन्नमहष्टिर्हेतत्याभूतानिपालयन्नजागर्त्तीतिश्लोकत्रयार्थः ३७ ३९ कश्चपूर्वापरमिदंजागर्त्तिप्रतिपा
लयतीत्यस्योत्तरमाह एवंप्रयोजन इत्यादिनाज्ञेयानः सनातनस्योदण्डः प्रत्ययपवचेत्येतेन ४० ४१ अददत्त इश्वर इतिश्ना

व्यवस्थापयति तिग्ममिमं लोकं नरेश्वर सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ३६ धर्म
युक्ता द्विजश्रेष्ठा देवयुक्ता भवंति च बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः ३७ प्रीताश्च देवता
नित्यमिन्द्रे परिवदंत्यपि अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ३८ प्राणाश्च सर्वभूतानां नि
त्यमन्ने प्रतिष्ठिताः तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्त्ति तासु च ३९ एवंप्रयोजनश्चैव दण्डः क्षत्रियतां
गतः रक्षन्प्रजाः स जागर्त्ति नित्यं सुविहितो नरः ४० ईश्वरः पुरुषः प्राणः सत्वं चित्तं प्रजापतिः भू
तात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ४१ अददद्दण्डमेवास्मै ऐश्वर्यमेव च बलेन यस्य सं
युक्तः सदा पंचविधात्मकः ४२ कुलं बहुधनामात्याः प्रज्ञा प्रोक्ता बलानि तु आहार्यमष्टकैर्द्रव्यै

षः अस्मैराज्ञे दण्डं दण्डनीतिं अतएवायं बलेन संयुक्तः पंचविधआत्मायस्य सतथा धर्ममवदार्य धर्मेश्वरजीवरूपेण पंचप्रकारात्मको राजा
४२ बहुधनामात्याः बहुधनामाः बलानि बलं तेजो ओजः सहः आव्यानि देहेन्द्रियबुद्धिसामर्थ्यानि अष्टकैरष्टसंख्याकैः अनंतरश्लोको
क्तमाणैर्हस्त्यादिभिराहार्यं अर्जनीयं अन्यत्तु बलं कोशवृद्धिरूपं ४३ ॥

+नमहि
२

४४ अंगस्यैन्यस्य राज्यस्य दंडमेवांगमिति वाक्यशेषात् युक्तस्य सन्नद्धस्य रथादिकं शरीरं विदुरिति तृतीयेनान्वयः रथदावैद्याः
४५ प्राड्विवाकाः पृच्छतीति प्राड् सचासौ विवाकश्च विवदमानयोर्द्वयोः प्रवृत्तिनिमित्तं वक्ता ४६ दंडमैन्यं दंडः प्रसिद्धः ४७ दंडो
दंडाधीनं ४८ प्रदर्शितो दण्डः स्थापनायच प्रदर्शिता ब्राह्मणाः ४९ भर्तृप्रत्ययः भर्त्ता राज्ञो विवदमानो प्रत्ययकारणं या

हस्तिनोश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च दैशिकाश्चारिकाश्चैव तदष्टांगं बलं स्मृतं ४४
अथ वांगस्य युक्तस्य रथिनो हस्तियायिनः अश्वारोहाः पदाताश्च मंत्रिणो रथदाश्च ये ४५
भिल्लकाः प्राड्विवाकाश्च मौहूर्त्तीदैवचिंतकाः कोशो मित्राणि धान्यं च सर्वोपकरणानि च
४६ सप्तप्रकृति चाष्टांगं शरीरमिह यद्विदुः राज्यस्य दंडमेवांगं दंडः प्रभव एव च ४७ ईश्व
राणां प्रयत्नेन कारणात् क्षत्रियस्य च दंडो दत्तः समानात्मा दंडो हीदं सनातनं ४८ राज्ञां प्रज्ञ
तमो नान्यो यथा धर्मः प्रदर्शितः ब्राह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ४९ भर्तृप्र
त्ययउत्पन्नो व्यवहारस्तथापरः तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ५०

सम्मतस्तथा वादिप्रतिवादिभ्यां प्रवर्तितो व्यवहारः तयोरन्यतरस्य प्रत्ययोऽभ्युपगमः लक्षणं यस्य स भर्तृप्रत्ययलक्षणः
अन्यतरपराजयात्तरत्यर्थः सहितो हितं रक्षंतेन युक्तः सहितः अन्यतरजयावहरत्यर्थः ५० ॥

वेदात्मावेदोक्तःदोषःपारदार्यादिःतन्निहन्त्रर्थंपर्षदंडनिगतश्चेत्तत्प्रायश्चित्तात्मकोवेदहेतुकएवदंडः मौलःकुलाचारप्र
युक्तोव्यवहारस्तत्रापिशास्त्रोक्तोदंडः यथाशूद्रस्यसुरापानेप्रायश्चित्तंनास्ति अथापिकस्मिंश्चित्कुलेएवंनियमःयोऽ
स्माकंमध्येसुरांपिबतिसजातिबाह्यइति तस्योल्लंघनेशूद्रस्यापिसुरापानोक्तंप्रायश्चित्तंभवति तथाचशास्त्रविदाम
नुक्रमणीयधर्मज्ञसमयःप्रमाणंवेदाश्चेति ५१ एतेषांत्रयाणांदंडानांमध्येआद्यःत्रियाधीनइत्याह उक्तइति त्रः।

व्यवहारस्तुवेदात्मावेदप्रत्ययउच्यते मौलश्चनरशार्दूलशास्त्रोक्तश्चतथापरः ५१ उ
क्तोयश्चापिदंडोमेसोभर्तृप्रत्ययलक्षणः ज्ञेयोनःसनरेंद्रस्थोदंडप्रत्ययलक्षणः ५२ दंड
प्रत्ययदृष्टोपिव्यवहारात्मकःस्मृतः व्यवहारःस्मृतोयश्चसवेदविषयात्मकः ५३ यश्च
वेदप्रसूतात्मासधर्मोगुणदर्शनः धर्मप्रत्ययउद्दिष्टोयथाधर्मःकृतात्मभिः ५४ ॥

अस्माभिःत्रिविधोदंडोपिज्ञेयः तत्रप्रत्ययोपिज्ञेयः ५२ अस्यापिवेदमूलत्वमाह दंडेति विविधोव्यवहारः अन्योन्यपरपत्नेपे
णास्वपत्नसाधनंव्यवहारः तदात्मकोन्यायःसयः सयद्यपिदंडप्रत्ययदृष्टस्तथापिसव्यवहारपदार्थोमन्वादिभिःस्मृतोस्ति अ
तःसोपिवैदिकश्रेणीतत्वात्वेदविषयात्मकोवेदार्थगोचरोस्तीत्यर्थः ५३ इतरौद्वौव्यवहारौवेदमूलत्वाद्धर्मरूपावित्याह यश्चेति
द्वाभ्यां यथाधर्मउद्दिष्टःममपारदार्यजेनाधर्मेणधर्मलोपोमाभूदितिपश्चात्तापवतोद्दिष्टःप्रायश्चित्तरूपोदंडोधर्मएवेत्यर्थः ५४

प्रजागोप्ता प्रजाहृतस्य नियमस्य वक्ता शूद्रस्यापि स्वरापानप्रायश्चित्तादि द्रष्टुः सोपि धर्म एवेत्यर्थः ५५ दंडव्यवहारधर्मवेदसत्यस्व
प्रजापतीनामैकात्म्यमाह द्वाभ्यां यश्चेति ५६ यतः स प्रजापतिर्भूतकृत् ततस्तेनो हेतोः अयमस्मदीयो भर्तृप्रत्ययलक्षणो व्यवहारः प्रवृत्तः त

व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्द्धनः ५५ यस्तु दं
डः स दृष्टो नो व्यवहारः सनातनः व्यवहारस्तु दृष्टो यः स वेद इति निश्चितं ५६ यश्च वेदः स वै धर्मो
यश्च धर्मः स सत्पथः ब्रह्मा पितामहः पूर्वं बभूवाथ प्रजापतिः ५७ लोकानां स हि सर्वेषां ससुरासुर
रक्षसां समनुष्योरगवतां कर्त्ता चैव स भूतकृत् ५८ ततो नो व्यवहारोयं भर्तृप्रत्ययलक्षणः त
स्मादिदमथोवाच व्यवहारनिदर्शनं ५९ माता पिता च भ्राता च भार्या चैव पुरोहितः नादंड्यो वि
द्यते राज्ञो यः स्वधर्मे न तिष्ठति ६० इति श्रीमहाभारते शांतिपर्वणि राजधर्मे १२१ भीष्म उ० अत्रा
प्युदाहरंतीममितिहासं पुरातनं अंगेषु राजा द्युतिमान्वसुहोम इति श्रुतः १ स राजा धर्मवि
न्नित्यं सह पत्न्या महातपाः मुंजपृष्ठं जगामाथ पितृदेवर्षिपूजितं २ तत्र शृंगे हिमवतो मेरौ कन
कपर्वते यत्र मुंजावटे रामो जटाहरणमादिशत् ३ तदाप्रभृति राजेंद्र ऋषिभिः संशितव्रतैः

स्मात् अस्मिन्विषये सरदं निदर्शनं वाक्यं उवाच ५९ तदेव वाक्यं प मुंजपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ४ ॥
ठतिमोनति यो राजा स्वधर्मेण तिष्ठति तस्य रात इति संबंधः ६० एकविंशतिशततमः १२१ अत्रवंद्रोत्पत्तोविषये १ २ ३ ४

५ ६ ११ १२ आचार्यवेतनं गुरुदक्षिणां १३ १४ यियक्षुः यष्टुमिच्छुः १५ क्षुवतः क्षुतवतः १६ ॥

मन्त्रैश्च बहुभिर्युक्तस्तदा श्रुतिमयैर्गुणैः ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ५ तेकदा
चिददीनात्ममावाशकस्यमानितः अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ६ सोपस्
त्यतं मान्धाता वसुहोमं नराधिपं दृष्ट्वा प्रकृष्टतपसं विनतोऽभ्यतिष्ठत ७ वसुहोमोपि राज्ञे वै पा
द्यमर्घ्यं न्यवेदयत् सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्यये ८ सद्भिराचरितं तत्र पूर्वं यथावदनु
यायिनं अपृच्छद्वसुहोमस्तु राजन् किं करवाणि ते ९ सोब्रवीत्परमप्रीतो मान्धाता राजसत्तमः
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन १० मान्धातोवाच बृहस्पतेर्मतं राजन्नधीतं सकलं
त्वया तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम ११ तदहं ज्ञातुमिच्छामि दण्ड उत्पद्यते कथं
किं चास्य पूर्वं जागर्ति किं वा परममुच्यते १२ कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ब्रूहि मे
सुमहाप्राज्ञ ददाम्याचार्यवेतनं १३ वसुहोम उ॰ शृणु राजन्यथा दण्डः संभूतो लोकसंग्रहः प्र
जाविनयरक्षार्थं धर्मस्यात्मा सनातनः १४ ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ऋत्विजं
नात्मनस्तुल्यं ददर्शेति हि नः श्रुतं १५ स गर्भं शिरसा देवो बहुवर्षाण्यधारयत् पूर्णे वर्षसह
स्रे तु स गर्भः क्षुवतोऽपतत् १६ ॥

दृष्टरूपप्रधानत्वात्दृष्टरूपंदीन्तापविग्रहः प्रजानियंतादीनांप्रविष्ट इतिनियमनरूपोदंडोऽन्तर्हितोऽभवदित्यर्थः ८ ९ १५ ॥

सत्वयोनामसंभूतः प्रजापतिररिंदम ऋषिणामासीन्महाराजयत्नेनतस्यमहात्मनः ७ तस्मिन्प्रहते
सर्वेत्वब्रह्मणः पार्थिवर्षभ दृष्टरूपप्रधानत्वाद्दंडः सोऽन्तर्हितोभवत् ८ तस्मिन्नन्तर्हितेचापि हितेव
वि प्रजानांसंकरोभवत् नैवकार्यंनवाकार्यंभोज्याभोज्यंनविद्यते ९ पेयापेयेकुतःसिद्धिर्हितेचा
पिवपरस्परं गम्यागम्यंतदानासीत्स्वपरस्वंचवैसमं १० परस्परंविलुंपतिसारमेयाययथामिषं अ
बलान्बलिनोघ्नंतिनिर्मर्यादमवर्तत ११ ततःपितामहोविष्णुंभगवंतंसनातनं संपूज्यवरदंदेवंम
हादेवमथाब्रवीत् १२ अत्रत्वमनुकंपांवैकर्तुमर्हसिकेशव संकरोनभवेदत्रयथात्तद्वैविधीयतां =
१३ ततःसभगवान्ध्यात्वाचिरंशूलवरायुधः आत्मानमात्मनादंडमसृजेद्देवसत्तमः १४ तस्माच्च
धर्मचरणान्नीतिर्देवीसरस्वती ससृजेदंडनीतिंसाविश्वलोकेषुविश्रुता १५ भूयःसभगवान्ध्या
त्वाचिरंशूलवरायुधः तस्यतस्यनिकायस्यचकारैकैकमीश्वरं १६ देवानामीश्वरंचक्रेदेवंदश
शतेक्षणं यमंवैवस्वतंचापिपितॄणामकरोत्प्रभुं १७ धनानांराक्षसानांचकुबेरमपिचेश्वरं
पर्वतानांपतिंमेरुंचमहोदधिं १८ अपांराज्येसुराणांचविदधेवरुणंप्रभुं मृत्युंप्राणेश्वरमथोतेजसां

श्री. शां.रा. टी. २३.

३१ ३२ मृत्योरिति विनयो वि‍वृद्धिश्चत्वारो विभागाः यस्य तस्य यावच्छत्रुर्धर्मः कर्म च रोगोऽपथ्याशनप्रयोजको रागः प्रसः
कर्म चेति वा ३३ ४९ विभज्य न्यायेन्यायाभासं च विविच्य दुष्टनिग्रह एव दण्डस्य मुख्यं प्रयोजनं हिरण्यादिग्रहणं तु लोकानां

रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुं महात्मानं महादेवं विशालाक्षं सनातनं ३० वसिष्ठमीशं विप्राणां वसूनां जातवेदसं तेजसां भास्करं चक्रे नक्षत्राणां निशाकरं ३१ वीरुधामंशुमन्तं च भूतानां च प्रभुं वरं कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ३२ कालं सर्वेशमकरोत्संहारविनयात्मकं मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ३३ ईश्वरः सर्वदेवस्तु राजराजो नराधिप सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ३४ तमेवं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ३५ महादेवस्ततस्तस्मिन् वृत्ते यज्ञे यथाविधि दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ३६ विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ३७ भृगुर्ददौ ऋषिभ्यस्तु दण्डं धर्मसमाहितं ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ३८ क्षुपस्तु मनवे प्रादादादित्यतनयाय च पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ३९ विभज्य दण्डः कर्त्तव्यो धर्मेणानयः स्वेच्छया दुष्टानां निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया ४०

विभीषिकार्थं न तु कोशवृद्ध्यर्थमित्यर्थः ४०

२३.

देहत्यागः प्रयागादौ विवासनं स्वदेशाद्दूरीकरणं ४१ ४२ ४३ ४५ ४६. ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ॥

मंगलं च शरीरस्य वयो नाल्पस्य कारणात् शरीरपीडास्तास्ताश्च देहत्यागविवासनं ४१ तेंद
दौ सूर्यपुत्रस्तु मनुर्वैवस्वतार्थकं प्रातुपूर्णा चंद्रदेवोयं प्रजागर्ति पालयन् ४२ इंद्रो जागर्ति भगवा
निद्रादग्निर्विभावसुः आग्नेर्जागर्ति वरुणाश्च प्रजापतिः ४३ प्रजापतेस्ततो धर्मो जागर्ति विनया
त्मकः धर्माच्च ब्रह्मणः श्रेष्ठो व्यवसायः सनातनः ४४ व्यवसायात्ततस्तेजो जागर्ति परिपालयन् औ
षध्यस्तेजसस्तस्मादोषधीभ्यश्च पर्वताः ४५ पर्वतेभ्यश्च जागर्ति रसो रसगुणास्तथा जागर्ति निर्ऋ
तिर्देवी ज्योतीषि निर्ऋतेरपि ४६ वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ब्रह्मा पितामहस्त
स्माज्जागर्ति प्रभुरव्ययः ४७ पितामहान्महादेवो जागर्ति भगवान् शिवः विश्वेदेवाः शिवाश्चापि वि
श्वेभ्यश्च तथार्षयः ४८ ऋषिभ्यो भगवान् सोमः सोमाद्देवाः सनातनाः देवेभ्यो ब्राह्मणा लोके जाग्र
तीत्युपधारय ४९ ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षंति धर्मतः स्थावरं जंगमं चैव क्षत्रियेभ्यः स
नातनं ५० प्रजा जाग्रति लोकेस्मिन् दंडो जागर्ति तासु च सर्वं संक्षिपते दंडः पितामहसमप्रभः ५१
जागर्ति कालः पूर्वं च मध्ये चांते च भारत ईश्वरः सर्वलोकस्य महादेवः प्रजापतिः ५२ देवदेवः शि
वः शिवः शर्वो जागर्ति सततं प्रभुः कपर्दी शंकरो रुद्रः शिवः स्थाणुरुमापतिः ५३ इत्येषु दंडो वि

५५ ५६ द्वाविंशाधिकशततमः १२२ तातेति १ किंमूलाः किमुद्दिश्य क्रियंत इत्यर्थः प्रभवत्यस्मादिति किमेषामुत्पत्तिस्थानं
तेषां साहित्यं कथं पृथक्त्वं च कथमिति चत्वारः प्रश्नाः २ सूचीकटाहन्यायेन साहित्यमाह यदेति सुमनसः शोभनचित्ताः सु
मांसः यदास्युः तदा लोके भूमौ धर्मपूर्वके ऽर्थनिश्चये ऽहं गर्भाधानोक्तविधिना ऋतौ भार्यां गत्वा सुपुत्रं लप्स्यामि एवं वेत्येवं रूपप्र

भीष्म उवाच इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः श्रुत्वा च सम्यग्वर्तेत सर्वान्कामानवा
प्नुयात् ५५ इति ते सर्वमाख्यातं यो दंडो मनुजर्षभ नियंता सर्वलोकस्य धर्माक्रांतस्य भारत
५६ इति श्रीमहाभारते शांतौ राजधर्मे दंडोत्पत्तिः १२२ युधिष्ठिर उ॰ तात धर्मार्थकामानां श्रो
तुमिच्छामि निश्चयं लोकयात्रा हि कात्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता १ धर्मार्थकामाः किंमू
लास्त्रयाणां प्रभवश्च कः अन्योन्यं चानुषज्जंते वर्तंते च पृथक्पृथक् २ भीष्म उवाच यदा
ते स्युः सुमनसो लोके धर्मार्थनिश्चये कालप्रभवसंस्थासु सज्जंते च त्रयस्तदा ३ ॥

वृत्ते सतीति धर्मार्थकामास्त्रयोपि कालः ऋतुवेला प्रभवः जाया संस्था सम्यक्कर्मनिष्पत्तिः तासु सतीषु सज्जंते युगपदुत्पद्य
ते योनिसंस्काररूपो धर्मः पुत्ररूपो ऽर्थः स्त्रीसंगरूपः कामश्च प्रभवतीत्यर्थः ३ ॥

आद्यस्यप्रश्नद्वयस्योत्तरमाह धर्मेति दिव्यदेवतादिशरीरप्राप्तिमर्थोश्वमेधादौ हिरण्यधर्मः क्रियतेऽतो दैवेन सहितोर्थो धर्मा
स्यमूलं अर्थस्य भोगार्थत्वं प्रसिद्धमिति कामस्य मूलोर्थ इति चोक्तं कामोर्थफलं कामस्य मूलं इन्द्रियप्रीतिरित्यर्थः संकल्पमू
लाः संकल्पप्रभवास्ते सर्वेपीति द्वितीयस्योत्तरं एतदेवोपपादयति संकल्प इति रूपादिविषयः संकल्पो रूपाद्यास्य भोगार्थी
इति सर्वेप्येते संकल्पमूलाः मोक्षस्तु तद्विलक्षणो निःसंकल्परूप इत्यर्थः ४ ५ किमेवं त्रिवर्गः सर्वेणापि न सेव्य इत्याश
क्य रजस्वलो रजःप्रधानः सत्त्वसेव्यः सत्त्वप्रधानः सेव्य एवेत्याह धर्मादिति आरोग्यार्थो धर्मः कामधर्मार्थमर्थः इन्द्रियप्री

धर्ममूलः सदैवार्थः कामोर्थफलमुच्यते संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ४
विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ५ धर्मः
शरीरसंगुप्तिर्धर्मार्थं चार्थ उच्यते कामो रतिफलश्चात्र सर्वे ते रजस्वलाः ६ सन्निकृष्टां
श्चरेदेतान्न चैतान्मनसा त्यजेत् विमुक्तस्तपसा सर्वान्धर्मादीन्कामनैष्ठिकान् ७ ॥

त्यर्थश्च कामः इत्येते हेया इत्यर्थः ६ स्वर्गादिकं वा इष्टं फलं विप्रकृष्टं तदर्थाः एते विप्रकृष्टाः आत्मज्ञानरूपं तु फलं सन्निकृष्टं तद
र्थाः एते सन्निकृष्टास्तान् चरेत् सेवेत धर्मश्चित्तशुद्ध्यर्थः अर्थो निष्कामकर्मार्थः कामो देहधारणमात्रार्थ इत्येवमेते सेव्या इत्य
र्थः धर्मादीन् कामनैष्ठिकान् कामान्तान् धर्मार्थकामान् सर्वान् अपि मनसापि न त्यजेत् किन्तु स्वरूपेणान त्यजेदित्यर्थः कथं त
र्हि नात्यजेदित्याह तपसा विमुक्त इति विचारेणैव तेभ्यो विमुक्तो भवेत् संगफलत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः ७

श्री।
शां. रा.
टी.
२३२

ततश्च किमत आह श्रेष्ठ इत्यर्द्धेन त्रिवर्गस्य बुद्धिर्निष्ठा श्रेष्ठमोदेपवाप्ति यत् यदि अयं कर्त्ता तं श्रेष्ठं प्राप्नुयादित्स्वतिष्ठा
मस्यात्तस्यैवैतल्लभ्यमेवेति भावः इहार्थे अस्मिन् धर्मादर्थो अर्थतो धर्म इति विषये अज्ञाननिकृष्टया बुद्ध्या उपलक्षितः अबुद्धि
विमूढः ततउक्तहृपधर्मार्थयोः फलं न प्राप्नुयात् उभयत्रापि व्यभिचारस्यान्यथासिद्धेः प्रदर्शितत्वात् तस्मात् श्रेष्ठमेव
तयोः फलमव्यभिचारीति तेयं ८ धर्मादीनां ज्ञस्खलनमुक्तं तदेव राजो दर्शयति अपेति अपध्यानं फलाभिसंधिः निगू

श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयान्नरः बुद्ध्या बुद्धिरिहार्थेन तदज्ञाननिकृष्टया ८ अपध्या
नमलो धर्मो मलोर्थस्य निगूहनं संप्रमोदमलः कामो भूयः स्वगुणवर्जितः ९ अत्राप्युदाह
रंतीममितिहासं पुरातनं कामंदकस्य संवादमांगरिष्ठस्य चोभयोः १० कामंदकमृषिमासी
नमभिवाद्य नराधिपः आंगरिष्ठोथ पप्रच्छ कृत्वा समयपर्ययं ११ यः पापं कुरुते राजा का
ममोहबलात्कृतः प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनं १२ अधर्मं धर्म इति च योज्ञा
नादाचरेन्नरः तं चापि प्रथितं लोके कथं राजा निवर्त्तयेत् १३ ॥

हृते दानभोगयोरप्रतिपादनं संप्रमोदः प्रीतिविशेषः स एव त्रिवर्गः स्वगुणवर्जितः स्वतंत्रोग्रगुणोऽपध्यानादिस्तेन वर्जितः स
न् भूयः बहुतरं फलं चित्तशुद्धिद्वारा ब्रह्मानंदरूपं प्रयच्छतीति शेषः ९ एवं पूर्वोक्तस्य प्रश्नत्रयस्योत्तरमुक्त्वा वर्त्तते च प्रा
यश्चित्तमिति चतुर्थप्रश्नस्योत्तरं इतिहासमुखेनाह अत्रापीति १० समयपर्ययं मर्यादाभंगं ११ प्रत्यासन्नस्य पश्चात्तप्तस्य

२३२

अत्रापस्तंबाम्रनिदर्शनात् तद्यथाम्रे फलार्थे निर्मिते छायागंधेत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्त इत्येवं द्र
पात् धर्मोऽर्थकामाभ्याम् अविनाभूतोऽर्थश्च कामेनाविनाभूतः सर्वत्रास्ति परिशेषात् काम एव धर्मार्थावतिक्रम्यास्तीत
कामं दण्डः यो धर्मार्थौ परित्यज्य काममेवानुवर्त्तते स धर्मार्थपरित्यागात् प्रज्ञानाशमिहार्च्छति
१४ प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः तस्मान्नास्तिकता चैव दुराचारश्च जायते १५
दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव १६ तं प्रजा
नानुवर्त्तन्ते ब्राह्मणा न च साधवः ततः संशयमाप्नोति तथा वध्यत्वमेति च १७ अपध्वस्तस्त्ववमतो
दुःखं जीवितमृच्छति जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् १८ अत्रैतदाहुराचार्याः पापस्य
परिगर्हणं सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च १९ महामना भवेद्धर्मे विवहेच्च महाकु
ले ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः २० जपेदुदकशीलः स्यात् सुमुखो नान्यथास्थितः
धर्मान्वितान् संप्रविशेद्बहिः कृत्वेव दुष्कृतीन् २१ प्रसादयेन्मधुरया वाचा वाप्यथ कर्मणा तवा
स्मीति वदेन्नित्यं परेषां कीर्त्तयन् गुणान् २२ अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् पापान्य
पि हि कृच्छ्राणि शमयेन्नात्र संशयः २३ गुरवो हि परं धर्मं यं ब्रूयुस्तं तथा कुरु गुरूणां हि प्रसादाद्धि
त्वं निंदतीय इति १४ १५ एवं निंदितस्य कर्त्तव्यमाह अत्रैतेति १९ २४ त्रयोविंशतितमः १२३ ॥ श्रेयः परमवाप्स्य सि

इमेजनाऽरतिशीलाध्यायः धर्मस्यकारणमितिशेषः १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ ॥

युधिष्ठिर उ· इमेजनानरश्रेष्ठप्रशंसन्तिसदाभुवि धर्मस्यशीलमेवादौततोमेसंशयोमहान्
१ यदितच्छक्यमस्माभिर्ज्ञातुंधर्मभृतांवर श्रोतुमिच्छामितत्सर्वंयथैतदुपलभ्यते २ कथं
नुप्राप्यतेशीलंश्रोतुमिच्छामिभारत किंलक्षणंचतत्प्रोक्तंब्रूहिमेवदतांवर ३ भीष्म उ·
पुरादुर्योधनेनेदंधृतराष्ट्रायमानद आख्यातंतप्यमानेनश्रियंदृष्ट्वातथागतां ४ इन्द्रप्रस्थेम
हाराजतवसभ्रातृकस्यह सभायांचावहसनंतत्सर्वंशृणुभारत ५ भवतस्तांसभांदृष्ट्वास
मृद्धिंचाप्यनुत्तमां दुर्योधनस्तदासीनःसर्वंपित्रेन्यवेदयत ६ श्रुत्वाहिधृतराष्ट्रश्चदुर्योधन
वचस्तदा अब्रवीत्कर्णसहितंदुर्योधनमिदंवचः ७ धृतराष्ट्र उ· किमर्थंतप्यसेपुत्रश्रोतुमि
च्छामितत्त्वतः श्रुत्वात्वामनुनेष्यामियदिसम्यग्भविष्यति ८ तथाचमहदैश्वर्यंप्राप्तःपरपुरं
जय किंकराभ्रातरःसर्वेमित्रसंबन्धिनःसदा ९ आच्छादयसिप्रावाराणश्नासिपिशितौद
नं आजानेयावहन्तित्वांकेनासिहरिणःकृशः १० दुर्योधन उ· दशतानिसहस्राणिस्नात
कानांमहात्मनां भुंजतेरुक्मपात्रीभिर्युधिष्ठिरनिवेशने ११ दृष्ट्वाचतांसभांदिव्यांदिव्यपु
ष्पफलान्वितां अश्वांस्तित्तिरकल्माषान्वस्त्राणिविविधानिच १२ ॥

१३ १५ गुणक्रीतेतिपाठे गुणावामा १६ २० नैश्रेयसं मोक्षोपयोगि २१ कोविशेषः नैश्रेयसादपि किं श्रेय इत्यर्थः २२ २३ ॥

दृष्ट्वातांपांडवेयानांऋद्धिंवैश्रवणीशुभां अमित्राणांसुमहतीमनुशोचापिभारत १३ धृतरा
ष्ट्र उ॰ यदीच्छसिश्रियंतातयाहृश्रीमायुधिष्टिरे विशिष्टांवाततोव्याघ्रशीलवान्भवपुत्रक १४ शी
लेनहित्रयोलोकाःशक्याजेतुंनसंशयः नहिकिंचिदसाध्यंवैलोकेशीलवतांभवेत् १५ एकरा
त्रेणमांधातात्र्यहेणजनमेजयः सप्तरात्रेणनाभागःपृथिवींप्रतिपेदिरे १६ एतेहिपार्थिवाःसर्वेशी
लवंतोदयान्विताः अतस्तेषांगुणक्रीतावसुधास्वयमागता १६ दुर्योधनउ॰ कथंतत्प्राप्यतेशी
लंश्रोतुमिच्छामिभारत येनशीलेनतैःप्राप्ताक्षिप्रमेववसुंधरा १७ धृतराष्ट्र उ॰ अत्राप्युदाहरं
तीममितिहासंपुरातनं नारदेनपुराप्रोक्तंशीलमाश्रित्यभारत १८ प्रह्लादेनहृतंराज्यंमहेंद्रस्य
महात्मनः शीलमाश्रित्यदैत्येनत्रैलोक्यंचवशीकृतं १९ ततोबृहस्पतिंशक्रःप्रांजलिःसमुपस्थि
तः तमुवाचमहाप्राज्ञःश्रेयइच्छामिवेदितुं २० ततोबृहस्पतिस्तस्मैज्ञानंनैश्रेयसंपरं कथ्या
यामासभगवान्देवेंद्रायकुरूद्वह २१ एतावच्छ्रेयइत्येवबृहस्पतिभारत इंद्रस्तुभूयःपप्रच्छ
कोविशेषोभवेदिति २२ बृहस्पतिरुवाच विशेषोस्तिमहांस्तातभार्गवस्यमहात्मनः अत्रा
गमयभद्रंतेभूयएवपुरंदर २३ ॥

२४ २८ आचर्यंश्रावणीयं २५ ३२ काव्यानिश्रुत्यप्रोक्तानि नीतिशास्त्राणि सर्वचतत्त्वाभिमानेननासूयामि ३३ तेषुन

आत्मनस्तत्ततः श्रेयो भार्गवात्स महातपाः ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः २४ तेना
पिसमनुज्ञातो भार्गवेण महात्मना श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः २५ भार्गवस्त्वाह
सर्वज्ञः प्रह्लादस्य महात्मनः ज्ञानमस्ति विशेषेण ततो हृष्टश्च सोऽभवत् २६ स ततो ब्राह्मणो
भूत्वा प्रह्लादं पाकशासनः गत्वा प्रोवाच मेधावी श्रेयः इच्छामि वेदितुं २७ प्रह्लादस्त्वब्रवीद्विप्रं
क्षणो नास्ति द्विजर्षभ त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते २८ ब्राह्मणस्त्वब्रवीद्राजन्यस्मि
न्काले क्षणो भवेत् ततोपादेष्टुमिच्छामि यदाचर्यमनुत्तमं २९ ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्म
वादिनः तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ३० ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमां च
कार सर्वभावेन यद्वत्स मनसेप्सितं ३१ पृष्टश्च तेन बहुशः प्राप्तं कथमिदं त्वया त्रैलोक्यराज्यं धर्मज्ञ
कारणं तद्ब्रवीहि मे ३२ प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् प्रह्लाद उ॰ नासूयामि द्वि
जान्विप्र राजास्मीति कदाचन काव्यानि वदतां तेषां संयच्छामि वहामि च ३३ ते विस्रब्धाः प्रभाषं
ते संयच्छन्ति च मां सदा ते मां काव्यपथे युक्तं शुश्रूषुमनसूयकं ३४ धर्मात्मानं जितक्रोधं नियतम्

यतेन्द्रियं समासिंचति शास्त्रैर्नीडं मधिव मक्षिकाः ३५

यः ते त्वां संयच्छंति नियमयामीति मां प्रभाषंतं ३४ त्वद्वाभिर्मधुमक्षिकाभिर्निर्मितं नीडं मधु तत्र मक्षिकामधिवसंते शास्त्राणि सिंचंति

वागग्रेप्वनन्तरुक्तकेविप्रायेषां तेषां ३६ ३७ ४१ तेजायमितिमेयिरार्थः ४२ ४४ तेजोविग्रहवत्तेजोमयशरीरं
सोऽहं वागाग्रविप्राणां रमनामबलेहिता स्वजात्यानयितिष्ठामि नक्षत्राणीव चंद्रमाः ३६
एतत्पृथिव्यामस्तमेतच्चत्वारस्तु सत्तमं यद्ब्राह्मणाः शुविकाव्यमेतच्छ्रुत्वा प्रवर्तते ३७ एतावदुक्त्वा य
इत्याह प्रह्लादो ब्रह्मवादिनं शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ३८ यथावत्कुरुते प्रीते
प्रीतोऽस्मि द्विजसत्तम वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ३९ कृतमित्येव दैत्येन्द्रमुवाच स च वै वा
द्विजः प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वरस्त्वत ४० ब्राह्मण उ० यदि राजन् प्रसन्नस्त्वं मम चेव चिकीर्षसि
प्रियं भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ४१ ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् वरे प्र
दिष्टे विप्रेण नाल्पतेजायमित्युत ४२ एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा उपाकृत्य तु विप्र
प्राय वरं दुःखान्वितोऽभवत् ४३ दत्ते वरे गते विप्रे चिन्तासीन्महती तदा प्रह्लादस्य महाराज निश्चयं
न च जग्मिवान् ४४ तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति तेजो विग्रहवद्भूत्वा शरीरमजहात्त
दा ४५ तमपृच्छन्महाकायं प्रह्लादः को भवानिति प्रत्याह तं तु शीलोऽस्मि त्यक्तो गच्छाम्य
हं त्वया ४६ तस्मिन्द्विजोत्तमे राजन्वत्स्याम्यहमनिन्दिते योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समा
हितः ४७ इत्युक्त्वान्तर्हितं तत्तु शक्रं चान्वाविशत्प्रभो तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ४८
शील ४५ ४६ ४७ ४८ ॥

श्री॰
शां॰ रा॰
टी॰
२३५

शरीरान्निःसृतस्तस्यकोभवानितिचाब्रवीत् धर्मंप्रह्लादमांविद्धियत्रासौद्विजसत्तमः ४९ तत्रया
स्यामिदैत्येन्द्रयतःशीलंततोह्यहं ततोपरोमहाराजप्रज्वलन्निवतेजसा ५० शरीरान्निःसृतस्तस्यप्र
ह्लादस्यमहात्मनः कोभवानितिपृष्टश्चतमाहसमहाद्युतिः ५१ सत्यंविद्ध्यसुरेन्द्राग्र्यप्रयास्येधर्मम
न्वहं तस्मिन्ननुगतेधर्मेमहान्वैपुरुषोपरः ५२ निश्चक्रामततस्तस्मात्पृष्टश्चाहमहाबलः वृत्तंप्र
ह्लादमांविद्धियतःसत्यंततोह्यहं ५३ तस्मिन्गतेमहाशब्दःशरीरात्तस्यनिर्ययौ पृष्टश्चाहबलंवि
द्धियतोवृत्तमहंततः ५४ इत्युक्त्वाप्रययौतत्रयतोवृत्तंनराधिप ततःप्रभामयीदेवीशरीरात्तस्यनिर्य
यौ तामपृच्छत्सदैत्येन्द्रःसाश्रीरित्येनमब्रवीत् ५५ उषितास्मिसुखंवीरत्वयिसत्यपराक्रम त्वया
त्यक्तागमिष्यामिबलंह्यनुगताह्यहं ५६ ततोभयंप्रादुरासीत्प्रह्लादस्यमहात्मनः अपृच्छच्चत
तोभूयःक्वयासिकमलालये ५७ त्वंहिसत्यव्रतादेवीलोकस्यपरमेश्वरी कश्चासौब्राह्मणश्रे
ष्ठस्तत्वमिच्छामिवेदितुं ५८ श्रीरुवाच सशक्रोब्रह्मचारीयस्त्वत्तश्चैवोपशिक्षितः त्रैलोक्ये
तेयदैश्वर्यंतत्तेनापहृतंप्रभो ५९ शीलेनहित्रयोलोकास्त्वयाधर्मज्ञनिर्जिताः तद्विज्ञायसु
रेन्द्रेणतवशीलंहृतंप्रभो ६० ॥

६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० अध्यायः २४ शीलं १ ॥

धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहं शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ६१ भीष्म उ॰
एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर दुर्योधनस्तु पितरं भूय एवाब्रवीद्वचः ६२ शीलस्य तत्त्वमि
च्छामि वेत्तुं कौरवनन्दन प्राप्यते च यथा शीलं तं चोपायं वदस्व मे ६३ धृतराष्ट्र उ॰ सोपायं पूर्वमु
द्दिष्टं प्रह्लादेन महात्मना संक्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर ६४ अद्रोहः सर्वभूतेषु कर्मणा
मनसा गिरा अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ६५ यदन्येषां हितं न स्यादात्मनः कर्म पौरुषं
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ६६ तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि शीलं समा
सेनैतत्ते कथितं कुरुसत्तम ६७ यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् न भुञ्जते चिरं तात
समूलाश्च न सन्ति ते ६८ धृतराष्ट्र उ॰ एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक यदीच्छसि श्रियं
तात सुविशिष्टां युधिष्ठिरं ६९ भीष्म उवाच एतत्कथितवान् पुत्रे धृतराष्ट्रो नराधिपः एतत्कु
रुष्व कौन्तेय ततः प्राप्स्यसि तत्फलं ७० इति श्रीमहाभारते शान्तौ राजधर्मे शीलवर्णनं नाम २४
युधिष्ठिर उ॰ शीलं प्रधानं पुरुषे कथितं ते पितामह कथं त्वाशा समुत्पन्ना या चाशा तद्वदस्व मे १

२ युक्तंयुद्धंविनैवराज्यार्इदानं कर्त्ताकरिष्यति ३ ५ पर्वतात्महत्त्वराज्यप्रविचाल्यत्वेन द्रुमात्महत्त्वरात्नवफलप्रदर्शकत्वेन ६

संशयोमेमहानेषसमुत्पन्नःपितामह छेत्ताचतस्यनान्योस्तित्वत्तःपरपुरंजय पितामहाशाम
हतीममासीद्धिसुयोधने प्राप्तेयुद्धेतुयद्युक्तंतत्कर्त्तायमितिप्रभो २ सर्वस्याशासुमहतीपुरुष
स्योपजायते तस्यांविहन्यमानायांदुःखोमृत्युर्नसंशयः ४ सोऽहंहताशोदुर्बुद्धिःकृतस्तेनदुरा
त्मना धार्त्तराष्ट्रेणराजेन्द्रपश्यमंदात्मतांमम ५ आशांमहत्तरांमन्येपर्वतादपिसद्रुमात् आका
शादपिवाराजन्नप्रमेयैववापुनः ६ एषाचैवकुरुश्रेष्ठदुर्विचिन्त्यासुदुर्लभा दुर्लभत्वाच्चपश्यामि
किमन्यद्दुर्लभंततः ७ भीष्म उ० अत्रतेवर्त्तयिष्यामियुधिष्ठिरनिबोधतत् इतिहासंसुमित्रस्यनिर्वृ
त्तमृषभस्यच ८ सुमित्रोनामराजर्षिर्हैहयोमृगयांगतः ससारसमृगंविद्ध्वाबाणेनानतपर्वणा ९
समृगोबाणमादायययावमितविक्रमः सचराजाबलान्तूर्णंससारमृगमन्तिकं १० ततोनिम्नंस्थ
लंचैवसमृगोऽद्रवदाशुगः मुहूर्त्तमिवराजेन्द्रसमेनसपथाऽगमत् ११ ततःसराजातारुण्यादौरसे
नबलेनच ससारबाणासनभृत्सखड्गीसतनुत्रवान् १२ ततोनदान्नदीश्चैवपल्वलानिवना
निच अतिक्रम्याभ्यतिक्रम्यससारैकोवनेचरः १३

दुर्लभादुर्जयः ७ ९ बाणासनभृत्धनुर्धरः १२ १३ ॥

१४ समभ्यक्तोविदः १५ १६ पंचविंशतिशततमः १२५ प्रविश्य १ २ ३ ४ हेमद्र ५ ६ ॥

मतकामान्मृगोराजन्नासाद्यासाद्यतंनृपं पुनरभ्येतिजवनोजवेनमहतातत: १४ सतस्य
बाणैर्बहुभिः समभ्यक्तोवनेचरः अक्रीडन्निवराजेन्द्र पुनरभ्येतिचांतिकं १५ पुनश्चजवमा
स्थायजवनोमृगयूथपः अतीत्यातीत्यराजेन्द्रपुनरभ्येतिचांतिकं १६ तस्यमर्मच्छिदंघो
रंतीक्ष्णंचाग्निस्पर्शनं समादायशरंश्रेष्ठंकार्मुकेणतथासृजत् १७ ततोगव्यूतिमात्रे
मृगयूथपयूथपः तस्यबाणपथंमुक्त्वातिष्ठिवान्प्रहसन्निव १८ तस्मिन्निपतितेबाणे
भूमौज्वलिततेजसि प्रविवेशमहारण्यंमृगोराजाप्यथाद्रवत् १९ इतिशांतेराजधर्मे
ऋषभगीतासु १२५ भीष्मउः प्रविश्यसमहारण्यंतापसानामथाश्रमं आससादततो
राजाश्रान्तश्चोपाविशत्तदा १ तंकार्मुकधरंदृष्ट्वाश्रमार्तंक्षुधितंतदा समेत्यऋषयस्तस्मि
न्पूजांचक्रुर्यथाविधि २ सपूजांमुनिभिर्दत्तांसंप्रगृह्यनराधिपः अपृच्छत्तापसान्सर्वा
न्तपसोवृद्धिमुत्तमां ३ तेनस्यराज्ञोवचनंसंप्रगृह्यतपोधनाः ऋषयोराजशार्दूलंतमपृच्छ
न्प्रयोजनं ४ केनभद्रसुखार्थेनसंप्राप्तोसितपोवनं पदातिर्बद्धनिस्त्रिंशोधन्वीबाणीनरेश्व
र ५ एतदिच्छामहेश्रोतुंकुतःप्राप्तोसिमानद कस्मिन्कुलेहिजातस्त्वंकिंनामाचासिब्रूहि

श्री॰
शां॰ रा॰
टी॰
२३०

१ ११ पुरस्य च त्यागः इति पदैकदेशोपि निक्षिप्यते आशा मृगाशा २ हिमवान्वेत्यनेन महोदधिर्विशिष्टस्तेन नगगनं तत्रान्वपद्येता

ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ आचचक्षे यथान्यायं परिचर्यां च भारत ७ हैहयानां कु
ले जातः सुमित्रो मित्रनंदन चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः ८ बलेन महता गुप्तः सा
मात्यः सावरोधनः मृगस्तु विद्धो बाणेन मया सरति शल्यवान् ९ तं द्रवंतमनुप्राप्तो वनमेतद्यदृच्छ
या भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः १० किं नु दुःखमतोन्यद्वै यदहं श्रमकर्शितः भ
वतामाश्रमं प्राप्तो हताशो नष्टलक्षणः ११ न राजलक्षणत्यागो न पुरस्य तपोधनाः दुःखं करो
ति तत्तीव्रं यथाशा विहता मम १२ हिमवान्वा महाशैलः समुद्रो वा महोदधिः महत्वान्नान्वपद्येतां
नभसो वांतरं तथा १३ आशायास्तपसि श्रेष्ठास्तथा नांतमहं गतः भवतां विदितं सर्वं सर्वज्ञा हि
तपोधनाः १४ भवंतः सुमहाभागास्तस्मात्पृच्छामि संशयं आशावान्पुरुषो यः स्यादंतरिक्षम
थापि वा १५ किं नु ज्यायस्तरं लोके महत्वात्प्रतिभाति वः एतदिच्छामि तत्वेन श्रोतुं किमिह दुर्ल
भं १६ यदि गुह्यं न वो नित्यं तदा पृच्छत माचिरं न गुह्यं श्रोतुमिच्छामि शुश्रूषुर्द्विजसत्तमाः १७
भवत्तपोविघातो वा यदि स्याद्विरमे ततः यदि वास्ति कथायोगो योयं प्रश्नो मयेरितः १८ ॥

नांतस्पततोप्युपवनादितततवाच श्रवांतरं पकोशमपि १३ १४ आशावान आशाया महत्वेन नत द्वतोपि महत्त्वमंतरिक्षवत् १५ १७ १८

१९ षट्विंशतिशततमः १२६ ततः १ २ वैहायसः विहायसागच्छंत्याः मंदाकिन्याः वैहायस्याअयं वैहायसः ३ ततो।

एतत्कारणात्सामर्थ्यं श्रोतुमिच्छामि तत्त्वतः भवंतोपितयोनित्याब्रूयुरेतत्समन्विताः
१९ इतिश्रीमहाभारते शांतौ राजधर्मे ऋषभगीतासु १२६ भीष्मउ० ततस्तेषां सम
स्तानमृषीणामृषिसत्तमः ऋषभोनामविप्रर्षिर्विस्मयन्निदमब्रवीत् १ पुराहंराजशार्दूल
तीर्थान्यनुचरन्प्रभो समासादितवान्दिव्यंनरनारायणाश्रमं २ यत्रसाबदरीरम्याह्रदोवैहा
यसस्तथा यत्रचाश्वशिराराजन्वेदान्पठतिशाश्वतान् ३ तस्मिन्सरसिकृत्वाहंविधिवत्तर्प
णंपुरा पितॄणांदेवतानांचततोश्रममियांतदा ४ रेमातेयत्रतौनित्यंनरनारायणावृषी
अदूरादाश्रमंकंचिद्वासार्थमगमंतदा तत्रचीराजिनधरंकृशमुच्चमतीवच अद्राक्षमृषि
मायांतंतनुंनामतपोधनं अन्यैर्नरैर्महाबाहोवपुषाष्टगुणान्वितं कृशताचापिराजर्षेन
दृष्टातादृशीक्वचित् ७ शरीरमपिराजेंद्रतस्यकानिष्ठिकासमं ग्रीवाबाहूतथापादौकेशा
श्चाद्भुतदर्शना ८ शिरःकायानुरूपंचकर्णौनेत्रेतथैवच तस्यवाक्चैवचेष्टाचसामान्ये
राजसत्तम ८ दृष्ट्वाहंतंकृशंविप्रंभीतःपरमदुर्मनाः पादौतस्याभिवाद्याथस्थितःप्रांजलि
श्रमंततत्राश्रमेमंडपंगतवानहं ४ ८ कायानुरूपंस्थूरग्रतः ९ निवेद्यनामगोत्रंचपितरंचनरर्षभ प्रदिष्टेचासने

११ १२ १३ १४ तेनतवपुत्रेणभूरिद्युम्नेन २० २१ २२ एवंमुनिनाउक्तः वीरद्युम्नः अवसीदत नष्टप्रायोभूदित्यर्थः २३ ॥

ततःसकथयामासकथांधर्मार्थसंहितां ऋषिमध्येमहाराजतनुर्दर्भस्तंतावरः तस्मिंस्तुकथय
त्येवराजाराजीवलोचनः उपायाज्जवनैरश्वैःसबलःसावरोधनः १२ स्मरन्पुत्रमरण्येवैनष्टंपरम
दुर्मनाः भूरिद्युम्नपिताश्रीमान्वीरद्युम्नोमहायशाः १३ इहद्रक्ष्यामितंपुत्रंद्रक्ष्यामीहेतिपार्थिवः ए
वमाशाकृतोराजाचरन्वनमिदंपुरा १४ दुर्लभःसमयाद्रष्टुंनूनंपरमधार्मिकः एकःपुत्रोमहारण्ये
नष्टश्चासकृत्तदा १५ दुर्लभःसमयाद्रष्टुमाशाचमहतीमम तयापरीतगात्रोहंमुमूर्षुर्नात्रसंशयः
१६ एतच्छ्रुत्वातुभगवांस्तनुर्मुनिवरोत्तमः अवाक्शिराध्यानपरोमुहूर्तमिवतस्थिवान् १७ तम
नुध्यांतमालक्ष्यराजापरमदुर्मनाः उवाचवाक्यंदीनात्मामंदंमंदमिवासकृत् १८ दुर्लभंकिंनुदे
वर्षेआशायाश्चैवकिंमहत् ब्रवीतुभगवानेतद्यदिगुह्यंनतेमयि १९ मुनिरुवाच महर्षिर्भगवां
स्तेनसर्वमासीद्विमानितः बालिशांबुद्धिमास्थायमंदभाग्यतयात्मनः २० अर्थयन्कलशंराजन्कां
चनंवल्कलानिच अवज्ञापूर्वकेनापिनसंपादितवांस्ततः निर्विण्णःसतुराजर्षिर्निराशःसमपद्य
त एवमुक्त्वाभिवाद्याथतमृषिंलोकपूजितं २२ श्रांतोव्यसीदद्धर्मात्मायथात्वंनरसत्तम २३ ॥

२४ एवं मुनिना राजसत्कारानन्तरं आगताः किमर्थमाश्रमे त्वं प्रविष्टोसीत्यपृच्छन् २५ २६ सप्तविंशतिशततमः १२७ वीर १२

अर्घ्यं ततः समानीय पाद्यं चैव महानृषिः आरण्यकेन विधिना राज्ञे सर्वं न्यवेदयत् २४ ततस्ते मु
नयः सर्वे परिवार्य नरर्षभं उपाविशन्महाराज सप्तर्षय इव ध्रुवं २५ अपृच्छंश्चैव तत्रैनं राजानम
पराजितं प्रयोजनमिदं सर्वमाश्रमस्य निवेशने २६ इति श्रीमहाभारते शान्तिपर्वणि राजधर्मे ऋष
भगीतासु १२७ राजोवाच वीरद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वन
मागतः १ एकः पुत्रः स विप्राग्र्य बाल एव च मेनघ न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहं
२ ऋषभ उ॰ इत्युक्ते वचने राज्ञा मुनिरधोमुखः तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपं ३
स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः आशाकृतश्च राजेन्द्र तपो दीर्घं समास्थितः ४ प्रतिग्रह
महं राज्ञां न करिष्ये कथंचन अन्येषां चैव वर्णानामिति कृत्वा धियं तदा ५ आशा हि पुरुषं बाल
मुत्थापयति तस्थुषी तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः वीरद्युम्नस्ततं भूयः पप्रच्छमु
निसत्तमं ६ राजोवाच आशायाः किं कृशत्वं च किं चेह भुवि दुर्लभं ब्रवीतु भगवानेतत्त्वं हि धर्मा
र्थदर्शिवान् ७ ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत् राजानं भगवान्विप्रस्ततः कृशतनु
स्तदा ८ ॥

३ आशाकृतः आशयाहतः कृशहिंसायामित्यस्य रूपं ४ ५ ६ ७ ८ ॥

आशायाः आशावतः समं अन्यत्कृशत्वेन समं किमपि नास्ति तस्याः तद्धीनस्यार्थस्य ९ कृशाकृशे य आशाजितः सकृशः येनाशाजिता स पुष्ट इत्यर्थः तस्यैवेत्याशाविषयस्यैव १० १२ दुर्लभं किं नु इति पूर्वप्रश्नस्योत्तरमाह दुर्लभ इति १३ ततः

ऋषिरुवाच कृशत्वेन समं राजन्नाशाया विद्यते नृप तस्या वै दुर्लभत्वात्तु प्रार्थिताः पार्थिवा मया ९ राजोवाच कृशाकृशे मया ब्रह्मन् गृहीते वचनात्तव दुर्लभत्वं च तस्यैव वेदवाक्यमिव द्विज १० संशयस्तु महाप्राज्ञ संजातो हृदये मम तन्मे सत्तम तत्त्वेन वक्तुमर्हसि पृच्छतः ११ त्वत्तः कृशतरं किं तु ब्रवीतु भगवानिदं यदि गुह्यं न ते किंचिद्विद्यते मुनिसत्तम १२ कृश उ॰ दुर्लभोऽप्यथवा नास्ति योऽर्थी धृतिमवाप्नुयात् सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते १३ सत्कृत्य नोपक्रियते परं शक्त्या यथार्हतः या सक्ता सर्वभूतेषु साशा कृशतरी मया १४ कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च अपकारिषु चासक्ता साशा कृशतरी मया १५ एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा प्रवृत्तिं यो न जानाति साशा कृशतरी मया १६ प्रदानकांक्षिणीनां च कन्यानां वयसि स्थिते श्रुत्वा कथास्तथायुक्ताः साशा कृशतरी मया १७ ॥

कृशतरमित्युपदोक्तस्योत्तरमाह सत्कृत्येति आदरेणाशांशप्रदर्श्य योऽर्थिनं नोपक्रियते तत्र या आशा साऽतिकृशा मया मतः दीनत्वसंपादकत्वात् १४ १६ तथायुक्ताः प्रदानस्थितमिति ग्राह्ययुक्ताः १७ ॥

१९ २१ उपालभ्यतत्रापराधंस्थापयित्वा २२ २६ ममममनः २७ अष्टाविंशतिशततमः १२८ ऋषभगीतासमाप्ता ना
म्तस्येति शीलवतोजिताशस्ययत्कर्तव्यंतदत्रोच्यते पर्याप्तिरलंभावस्तृप्तिरितियावत् स्वात्महन्त्रिस्थः समाधिस्थस्त्वेनवा

एतच्छ्रुत्वाततोराजन्सराजासावीरद्युम्नः संस्पृश्यपादौशिरसानिपपातद्विजर्षभे १९ राजो
वाच प्रसादयेत्वांभगवन्पुत्रेणाप्यस्मिसंगतः यदेतदुक्तंभवतासंप्रतिद्विजसत्तम २० सत्यमे
तन्नसंदेहोयदेतद्व्याहृतंत्वया ततःप्रहस्यभगवांस्तनुर्धर्मभृतांवर २१ पुत्रमस्यानयत्क्षिप्रंतपसा
चश्रुतेनच ससमानीयतंपुत्रंतमुपालभ्यपार्थिवं २२ आत्मानंदर्शयामासधर्मंधर्मभृतांवरः
संदर्शयित्वाचात्मानंदिव्यमद्भुतदर्शनं २३ विपाप्माविगतक्रोधश्चचारवनमंतिकात् एतद्दृ
ष्टंमयाराजंस्तथाचवचनंश्रुतं आशामपनयस्वाशुततःकृशतरीमिमां २४ भीष्मउ॰ सतत्रोक्त
स्तदाराजन्नृषभेणमहात्मना सुमित्रोपनयत्क्षिप्रमाशांकृशतरींततः २५ एवंत्वमपिकौंते
यश्रुत्वावाणीमिमांमम स्थिरोभवमहाराजहिमवानिवपर्वतः त्वंहिद्रष्टाचश्रोताचकृच्छ्रेष्व
र्थेषुविदः श्रुत्वामममहाराजनसंतप्तुमिहार्हसि २७ इतिशांतौराजधर्मेऋषभगीतासमा
प्ता १२८ युधिष्ठिरउ॰ नामृतस्येवपर्याप्तिर्ममास्तिब्रुवतित्वयि यथाहिस्वात्महन्त्रिस्थस्तथाहंनो
स्मिभारत १ तस्मात्कथयभूयस्त्वंधर्ममेवपितामह नहितृप्तिमहंयामिपिबन्धर्मामृतंहिते २

हमपित्वद्वाग्मृतेनतृप्तोस्मीत्यर्थः १ २ ॥

श्री॰
शां॰रा॰
टी॰
२९॰

१ २ धर्मेणमयातवकिंकृत्यंक्रियतामितिब्रुवन्यमः न्यमंत्रयततंसंपूर्वोक्तवान् ८ ९ अश्वमेधैरितिस्वधर्ममात्रस्योप
लक्षणं ॥ नवविंशतिशततमः १२९ मित्रैरित्यध्यायःवक्ष्यमाणोनामापद्धर्माणांसूत्रभूतः तत्रसर्वप्रकारैरापदिप्राप्तायाम

भीष्मउ॰ अत्राप्युदाहरंतीममितिहासंपुरातनं गौतमस्यचसंवादंयमस्यचमहात्मनः १ पारि
यात्रगिरिंप्राप्यगौतमस्याश्रमोमहान् उवासगौतमोयत्रकालंतमपिमेशृणु २ षष्टिंवर्षसहस्राणि
सोतप्यद्गौतमस्तपः तमुग्रतपसंयुक्तंभावितंसुमहामुनिं ३ उपयातोनरव्याघ्रलोकपालोयमस्तदा
तमपश्यत्सुतपसमृषिंवैगौतमंतदा ४ संतंविदित्वाब्रह्मर्षिर्यममागतमोजसा प्रांजलिःप्रयतोभूत्वा
उपातिष्ठत्तपोधनः ५ तंधर्मराजोदृष्ट्वैवनमस्कृत्यैवद्विजर्षभं न्यमंत्रयतधर्मेणक्रियतांकिमितिब्रुव
न् ६ गौतमउ॰ मातापितृभ्यामानृण्यंकिंकृत्वासमवाप्नुयात् कथंचलोकानाप्नोतिपुरुषोदुर्लभा
न्शुभान् ७ यमउ॰ तपःशौचवतानित्यंसत्यधर्मरतेनच मातापित्रोरहरहःपूजनंकार्यमंजसा
८ अश्वमेधैश्चयष्टव्यंबहुभिःस्वाप्तदक्षिणैः तेनलोकानवाप्नोतिपुरुषोद्भुतदर्शनात् ९ इतिश्री
महाभारतेशांतौराजधर्मे १२९ युधिष्ठिरउ॰ मित्रैःप्रहीयमाणस्यबह्वमित्रस्यकागतिः राज्ञः
क्षीणकोशस्यबलहीनस्यभारत १ दुष्टामात्यसहायस्यश्रुतमंत्रस्यसर्वशः राज्यात्प्रच्यवमान

धर्मेणप्रजापीडनेनापिकोशवृद्धिःकर्तव्यानेनैवसर्वाआपदस्तरतीतिअध्यायार्थः १ २ ॥ स्यगतिंश्रेयामपश्यतः २

सर्वतः सर्वैः परस्यचक्रंराष्ट्रंप्रतिअभियातस्य बलीयसासार्द्धं ३ असंविहितंसम्यगरक्षितंराष्ट्रंयेनतस्य अतिपीडनात्परा
कीयामात्यादीनांभेदोपिअप्राप्यः तत्रअर्थसाध्यंजीवितंवासुकृतंअर्थश्चामार्गेणापिग्राह्यः उक्तार्थंविनामरणंवाश्रेयइतिभा
ईतप्रश्नः ४ मामाप्राक्षीरहंवानस्मि ५ वचनात्शास्त्रात्धर्मंश्रुत्वाउपास्यचक्वचिद्देशेकश्चिदेवसाधुर्भवति ६ आपत्का

परचक्राभियातस्यपरराष्ट्राणिमर्द्दतः विग्रहेवर्त्तमानस्यदुर्बलस्यबलीयसा ३ असंविहि
तराष्ट्रस्यदेशकालावजानतः अप्राप्यचभवेत्सांत्वंभेदोवाप्यतिपीडनात् ४ जीवितंवार्थहेतोर्वा
तत्रकिंसुकृतंभवेत् ४ भीष्मउ॰ गुह्यंधर्मंत्वमाप्राक्षीरतीवभरतर्षभ अपृष्टोनोत्सहेवक्तुंधर्म
मेनंयुधिष्ठिर ५ धर्मोह्यणीयान्वचनाद्बुद्धेश्चभरतर्षभ श्रुत्वोपास्यसदाचारैःसाधुर्भवति
सक्वचित् ६ कर्मणाबुद्धिपूर्वेणभवत्याढ्योनवापुनः तादृशोयमनुप्रश्नःसव्यवस्यःस्वयाधि
या ७ उपायंधर्मबहुलंयात्रार्थंशृणुभारत नाहमेतादृशंधर्मंबुभूषेधर्मकारणात् ८ ॥

लेयनार्थंप्रजाःकर्षन्नपिधनंनलभतेचेदापदंनिस्तीर्यप्रजाअनुकंपयेत् नलभतेचेत्तस्यप्रजानांचनाशोभवतीतिविचार्यस्वस्य
प्रश्नस्योत्तरंस्वयमेवचिंतनीयमित्यर्थः ७ यात्रार्थंराज्ञांव्यवहारनिर्वाहार्थंधर्मोराज्ञामापद्धर्मस्तदर्थंत्वनवद्यंउपायंशृ
णु अहंत्वनबुभूषइतितस्यशास्त्रैरनादरणीयत्वंदर्शितं बुभूषेप्राप्तुमिच्छामि ८ ॥

एवउपायोदुःखादानःप्रजानांदुःखेनआदीयतेगीक्रियतेऽतएवपश्चात्तयोपमः मध्यात्तल्यःप्रजापीडनस्मृता
पात्समुद्भूतोद्भूताशनः राज्ञःप्राणानबलंकोशंनादद्याद्विनिवर्तनइति अभिगम्याश्रिताःमन्यश्रिताःसंसेवा
सांप्रजानामितिवा १ ० अयोगउपायाभावः १ २ अनुगृह्णीयात्प्राकर्षिताःप्रजाइतिशेषः उपायधर्मउपधर्मं

दुःखादानःदयोयंस्यात्तपश्चात्तयोपमः अभिगम्यमतीनांहिसर्वासामेवनिश्चयः ८
यथायथाहिपुरुषोनित्यंशास्त्रमवेक्षते तथातथाविजानातिविज्ञानमथरोचते ९ अवि
ज्ञानादयोगोहियोगोभूतिकरःपरः अशंकमानोवचनमनसूयुरिदंशृणु १० राज्ञःको
शक्षयादेवजायतेबलसंक्षयः कोशंचजनयेद्राजानिर्जलेभ्योयथाजलं ११ कालंप्रा
प्यानुगृह्णीयादेषधर्मःसनातनः उपायधर्मंप्राप्येमंपूर्वैराचरितंजनैः १२ अन्योधर्मःस
मर्थानामापत्स्वन्यश्चभारत प्राक्कोशात्प्राप्यतेधर्मोवृत्तिर्धर्माद्गरीयसी १४ धर्मंप्राप्य
यवृत्तिंनबलीयान्नविंदति यस्माद्बलस्यापपतिरेकांतेननविद्यते १५ ॥

अनुदुःखधर्ममितियावत्सार्द्धः
१३ प्राक्कोशात्विनापिकोशंतपआदिनाधर्मःवृत्तिर्जीवनंतल्लोपप्रसक्तौतुकोशसंचयविरोधीधर्मोनादर्तव्यइत्यर्थः १४ नबलीयान्नो
कयेतिवत्समासःदुर्बलोधर्मंप्राप्यअनुरुध्यन्यायवृत्तिंन्यायोपेतांश्रेष्ठांजीविकांनविंदतियस्मात्यत्नाद्वावश्यंबलंभवतीतिनियमोपि

तस्मादापदि अधर्मोपि कर्त्तव्यत्वेन श्रूयते तत्र च यो धर्मलक्षणः धर्मः स अधर्म एव भवतीति शास्त्रधर्मादिति श्लोकद्वयार्थः
प्रजाकर्षणादिधर्मोप्यापदि धर्म एवाप्रकृतस्थस्य एवाधर्म इति भावः १६ अनंतरं आपन्निवृत्त्यनन्तरं तत्र पूर्वोक्ताधर्मे किंवि
चिकित्स्यते प्रायश्चित्तादिकं कराग्रहणादिकं च विधीयते दोषपरिहारार्थमित्यर्थः फलितमाह यथेति १७ धर्मस्येति क

तस्मादापत्स्वधर्मोपि श्रूयते धर्मलक्षणः अधर्मो जायते तस्मिन्निति वै कवयो विदुः १६ अ
नंतरं क्षत्रियस्य तत्र किं विचिकित्स्यते यथास्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा तत्कर्त्तव्या
मिहेत्याहुर्नात्मानमवसादयेत् १७ सर्वात्मनैव धर्मस्य न परस्य न चात्मनः सर्वोपायैरुज्जि
हीर्षेदात्मानमिति निश्चयः १८ तत्र धर्मविदां तात निश्चयो धर्मनैपुणे उद्यमो नैपुणं क्षात्रे बा
हुवीर्यादिति श्रुतिः क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति अन्यत्र तापसस्वाच्च ब्राह्मणस्वा
च्च भारत २० यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् अभोज्यान्नानि चाश्नीयात्तथेदं नात्र
संशयः २१ पीडितस्य किमद्वारमुत्पथो विधृतस्य च अद्वारतः प्रद्रवति यदा भवति पीडितः २२
तस्य कोशबलज्यान्या सर्वलोकपराभवः भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका २३

र्मणा धर्षी परस्य धर्मतो जिहीर्षेत्तेनापि आत्मनो धर्मं उज्जिहीर्षेदपि तु आत्मानमेव उज्जिहीर्षेत् स्वपरधर्मलोपेप्यात्मानमेवोद्ध
र्त्तुमिच्छेदित्यर्थः १८ २२ विधृतस्य निरुद्धस्य क उत्पथः न कोपि किं तु यथा अपथेनापि प्रद्रवति तथा यतितव्यमिति शेषः २३

नविहितायस्येत्यनुषङ्गपते स्वधर्मोविजयेनक्षत्रियस्यधनार्जनंतस्य अनंतरापत्याक्षत्रास्यपरराष्ट्रावमर्दनेनधनार्जनं ते
नहत्तिस्तस्यविहितेत्यनुषंगः जात्यान्स्वजातीयान् अनुपजीवतःअयाचमानस्य नित्यंप्रथमंकल्पंवद्वतोपिआपदि
अनुकल्पेनजीवनंयुक्तमित्यर्थः २४ अन्यायेनविपर्ययेणाबुभुक्षितस्म्यंद्वविप्रोधान्यमब्राह्मणाद्धरेदितिश्रुतिग्रहालाभो
ब्राह्मणस्ययथाचौर्यंविहितं २५ एवंक्षत्रियोप्यापदिविशिष्टेभ्योबलादाददीतेत्यत्रमेदेहएवनयुक्तश्त्यर्थः २६ २२

स्वधर्मातंतनराष्ट्रत्तिर्जीत्यानन्नुपजीवितः वद्वतःप्रथमंकल्पमनुकल्पेनजीवनं २४
आपद्गतेनधर्माणामन्यायेनोपजीवनं अपिहैतब्राह्मणाशुद्वहृष्टंश्रुतिपरिद्वये २५ द्विति
येसंश्रायःकस्मादित्येवंनिश्चितंसदा आददीतविशिष्टेभ्योनावसीदेत्कथंचन २६ हृ
तारंरक्षितारंचप्रजानांतत्रियंविदुः तस्मात्संरक्षताकार्यमादानंक्षत्रबंधुना २७ अन्य
त्रवाजन्हिंसायाःहत्तिर्नैवास्तिकस्यचित् अप्यवापसमुत्थस्यपकस्यचरतोघृतेः २८ न
शावलिखिताहत्तिशाकमास्थायजीवितं विशेषतःक्षत्रश्रेष्टप्रजापालनमीप्सया २९

अस्यापवादमाहान्यत्रेति हिंसायाःक्लेशजनपीडामकृत्वेत्यर्थः २८ हिंसायांकस्यचिदपिहत्तिर्हिंसाष्टविकानविहितास्तीति
नेत्यर्थः अपापसमुत्थस्यैवनैवतिष्ठतः २८ शावललाटास्थिनिलिखिताहत्तिंदिष्टमाजालबिनारात्ताजीविकेनशाकं
शावेःकंबुललाटास्थिइतिविश्वलोचनः ईप्सयाउत्कंठेनप्रजापालनंचिकीर्षतेतिशेषः २९ ॥

३० ३१ अंतरं रक्षतः ३१ बीजं भक्तेन संपादितं चेदयं प्रभक्तदोर्लभं यथा भवति एवमल्पधनो राजा प्रजाभिर्नरक्षितो न स्वपति न
स्वप्नं च तस्मिन्सर्वाः प्रजा अपि न स्वपतीत्यर्थः एतत्सर्वं हि हीनं दर्शनं शास्त्रं ३२ अवृत्त्याजीविकाया अभावेन यस्य राष्ट्रमवसीदा
ति यो वा अन्त्यमनुष्यः परप्रेष्यः अल्पेति पाठे अल्पपरीवारः यो वा वैदेशिको देशान्तरोपजीवितस्य राज्ञो जीवितं धिक् ३३ ॥

परस्परं हि संरक्ष्या राज्ञा राष्ट्रेण चापदि नित्यमेव हि कर्तव्य एष धर्मः सनातनः ३० राजा राष्ट्रं य
थापत्सु द्रव्यौघैरभिरक्षति राष्ट्रेण राजा व्यसने रक्षितव्यस्तथा भवेत् ३१ कोशं दण्डं बलं मित्रं यद
न्यदपि संचितं न कुर्वीतान्तरं राष्ट्रे राजा परिगतः क्षुधा ३१ बीजं भक्तेन संपाद्यमिति धर्मविदो
विदुः अत्रैतच्छाम्बरस्याहुर्महामायस्य दर्शनं ३२ धिक्तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति
अवृत्त्यान्त्यमनुष्यो ऽपि यो वै वैदेशिकस्तथापि ३३ राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलं तन्मू
लं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ३४ नान्यानपीडयित्वेह कोशः शक्यः कुतो बलं तदा
र्थं पीडयित्वा च दोषं प्राप्तुं न सो ऽर्हति ३५ अकार्यमपि यज्ञार्थं क्रियते यज्ञकर्मसु एतस्मात्कार
णाद्राजा न दोषं प्राप्तुमर्हति ३६ ॥

तन्मूलं दीर्घकारणं कोशो बलं च तत्रापि कोशो बलस्य मूलं तत्बलं धर्माणां मूलं धर्मश्च प्रजानां मूलं अतः सर्वस्य मूलभूतो
कोशो वर्द्धयेत् ३४ ३५ कारणात्तद्धान्तात् राजा यज्ञार्थं प्रजाः कर्षन् न दोषं प्राप्नोति ३६ ॥

श्री·
शां·रा·
टी·
२५३

अन्यत आपदि प्रजापीडनमप्यर्थार्थं भवति अपरं अपीडनं विपरीतं अनर्थार्थं भवति यदप्यन्यत अनर्थार्थं अर्थाभावार्थं कृज
रपालनादि भवति तदेवेदार्थस्य कारणं उत्पादकं भवति एवमेतदपीत्याद्यर्द्धेन एवमिति सार्द्धः ३७ यत्नार्थमिति यथायआदि
कं यत्नार्थं यत्नश्च चित्तसंस्कारार्थः यज्ञादिकं यत्नः संस्कारश्चेति तत्त्रयं अर्थार्थं मोक्षार्थं भवति एवं दंडः कोशार्थं कोशो बलार्थं बा

अर्थार्थमन्यद्भवति विपरीतमथापरं अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थकारणं एवं बुद्ध्या संप्र
पश्येन्मेधावी कर्मनिश्चयं ३७ यत्नार्थमन्यद्भवति यत्नो ऽन्यार्थस्तथापरः यत्नस्यार्थार्थमेवा
न्यत्तत्सर्वं यत्नसाधनं ३८ उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीं वृक्षं छिंदंति यत्नार्थं तत्र ये परि
पंथिनः ३९ द्रुमाः केचन सामंताः ध्रुवं छिंदंति तानपि तेचापि निपतंतो ऽन्यान् निघ्नंत्येव वनस्पतीन्
४० एवं कोशस्य महतो ये नराः परिपंथिनः तानहत्वा न पश्यामि सिद्धिमत्र परंतप येन तज्जयते
लोकावुभौ परमिमं तथा सत्यधर्मवचनं यथा नास्त्यधनस्तथा ४२ सर्वोपायैरादधीत धनं यत्न
प्रयोजनं न तत्ल्पदोषः स्यादेवं कार्याकार्येषु भारत ४३ ॥

लेशात्तु पराभवार्थं कोशो बलं जयश्चेति त्रयं
राष्ट्रपुष्ट्यर्थमिति भावः ३८ ३९ सामंताः प्रतिपदभूताः ४० ४१ यथानास्त्यधनस्तथेति जीवन्नपि तत्समयधनस्योक्तं ४२ यत्नार्थं
धनं सर्वैरप्यतिनिषिद्धैरुपायैरादधीत एवं तु कार्याकार्येषु विहितनिषिद्धेषु आपदि प्रजापीडने विहितं तद्देवानापदि निषिद्धं तथाभू
तेष्वर्थेषु तत्ल्पदोषान्न स्यात् देशकालानुसारेण अकार्यस्यापि कार्यं भवत्यकार्यमपि कार्यं भवति तत्र विपरीतेन प्रतिपद्येतेति भावः ४२

श्री॰
शां॰ रा॰
टी॰
२५४

पतोधनसंग्रहत्यागौ एकस्मिन्सुखेन संभवतः युगपत्तयोर्हन्निर्नंसिष्यति विरक्तोऽपि संग्रहासंभवात् ५४ अन्येष्वत्यागासंभवमाह यदि
दमितितस्मादविरक्तेनाप्यात्रायनमेष्टव्यमेवेतिभावः ५५ ननु किंपापमूलेनधनेनकिंचतन्मूलेनराज्येनेत्याशंक्याह नचेति अनापा
द्येवराज्ञोबहुकरादानंपापमूलं आपदितुनतत्तथाभवति अतोनपापमूलंधनंनापितन्मूलंराज्यंसंदेयं अपितुधर्महेतुत्वादवश्य

नैतौसंभवतोराजन्कथंचिदपिपार्थिव नह्यरण्येषुपश्यामिधनवृद्धानहंक्वचित् ५४ यदिदं
दृश्यतेवित्तंपृथिव्यामिहकिंचन ममेदंस्यान्ममेदंस्यादित्ययंकांक्षतेजनः ५५ नचराज्यसमो
धर्मःकश्चिदस्तिपरंतप धर्मःसंशब्दितोराज्ञामापदर्थमतोऽन्यथा ५६ दानेनकर्मणाचान्येत
पसान्येतपस्विनः बुद्ध्यादाक्ष्येणचैवान्येविंदंतिधनसंचयान् ५७ अधनंदुर्बलंप्राहुर्धनेनबल
वान्भवेत् सर्वंधनवताप्राप्यंसर्वंतरतिकोशवान् ५८ कोशेनधर्मःकामश्चपरलोकस्तथाह्य
यं तंचधर्मेणलिप्सेतनाधर्मेणकदाचन ५९ इतिश्रीमहाभारतेशांतौराजधर्माःसमाप्ताइ
ति १३० ॥

कर्तव्यत्वमेवेत्यर्थः ५६ ५७ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोःश्रीनीलकंठ ५४
स्यकृतौभारतभावदीपेशांतौराजधर्मार्थप्रकाशःसमाप्तिमगमत् त्रिंशदधिकशततमोऽध्यायः १३० ॥